कत्वसम्भवात् अतिरिक्तसामान्याभावासिद्धिप्रसङ्ग, एवमेकस्यैवाभाव-स्याधिकरणविशेषकालावच्छेदेन वृत्तित्वावच्छेदेन घटत्वपटत्वादिरूपनिखिल-धर्मावच्छिन्नप्रतियोगिताकत्वसम्भवेनाभावभेदविलोपप्रसङ्ग, एव रक्तादौ कारणकालावच्छेदेन रक्तत्वादे रक्तत्वावच्छिन्नप्रतियोगितास्वीकारोपगमे तत्समानाधिकरणत्वनियमनस्यान्तरस्य तत्समानाधिकरणैकत्वादेरेव वा तादृशकालावच्छेदेन तत्तत्त्वपर्याय विनिगमनाविरहप्रसङ्गश्चेति ध्वस प्रागभावाधिकरणे अत्यन्ताभावस्वीकरणमेव न्याय्यम् ।

अथैतादृशयुक्त्या रक्तध्वसादिमति तदत्यन्ताभावसिद्धावपि रूप ध्वसादिमत्या पृथिव्या रूपत्वावच्छिन्नाभावो निर्युक्तिक एवेति चेन्न, रूपोत्पत्तेर्द्वितीयक्षणे पुन स्तदधिकरणे सामान्यसामग्रीबलाद्रूपान्तरोत्पत्ति वारणाय रूप प्रति रूपत्वावच्छिन्नाभावस्य हेतुत्व कल्पनीयम्, एवच उत्पत्तिकाले पाकजरूपनाशोत्पत्तिक्षणे च रूपत्वावच्छिन्नाभावास्वीकारे तदु त्तर रूपानुत्पादप्रसङ्ग, रूपोत्पादानन्तर रूपसामान्यस्य पुनरुत्पादश्च प्रागभावहेतुतया दुर्वार, रूपवत्यपि पाकजभाविरूपप्रागभावसत्त्वात् । नचैवमपि पृथिव्या रूपात्यन्ताभावो निर्युक्तिक, प्रलयकालावच्छेदेन तत्र रूपात्यन्ताभावो भवता स्वीक्रियते तत्कालावच्छेदेन रूपप्रागभावे रूपत्वावच्छिन्नप्रतियोगिताक स्वीकारेणैवोपपत्तेरिति वाच्यम्, दत्तोत्तरत्वात्।

इदन्त्ववधेयम्, उक्तयुक्त्या उत्पत्तिकालावच्छेदेन घटादौ रूप त्वावच्छिन्नाभावसिद्धावपि प्रलयकालावच्छेदेन परमाणौ तत्सत्त्वे मानाभाव, एव रूप प्रति रूपत्वावच्छिन्नाभावहेतुत्वमेव न कल्प्यते, स्पर्शोत्पत्त्यनु रोधे । अवश्यकल्पनीयस्पर्शसामान्याभावस्य तद्धेतुतयैव रूपवति रूपा न्तरापत्ते शक्यवारणत्वात्, वायौ स्पर्शोत्पत्त्यनन्तर स्पर्शोत्पत्तिवारणाय स्पर्श प्रति रूपाभावहेतुताया वक्तुमशक्यत्वात् स्पर्शाभावहेतुताया आवश्यकत्वात् । नच रूप प्रति स्पर्शाभावहेतुत्वे यत्र पाकाद्रूपसत्त्वे

[दी] तत्सामानाधिकरण्यं च स्वविशिष्टहेत्वधिकरणावच्छेदेन बोध्यम्; तेन गोत्वजन्यद्रव्यत्वप्रळयावृत्तित्वादिना गवादेरभाववत्त्व गवाद्यनधिकरणधर्म्यवच्छेदेन तद्वति काले

---

स्पर्शनाशः तत्र स्पर्शान्तरोत्पत्तिकाले रूपान्तरोत्पादप्रसङ्ग इति वाच्यम्, एकजातीयस्यैव अग्निसंयोगस्य रूपरसगन्धस्पर्शनाशकतया स्पर्शनाशकाले रूपनाशस्यावश्यकत्वादिति । एवं ध्वंसप्रागभावाधिकरणे सामयिकात्यन्ताभावानभ्युपगन्तृमते तादृशात्यन्ताभावो न तदधिकरणे कल्प्यते, अनन्ताधिकरणेषु तादृशाभावकल्पनामपेक्ष्य लाघवादेकैकेषु तद्धर्मावच्छिन्नयद्भेदेषु तद्धर्मावच्छिन्नप्रतियोगिताकत्वकल्पनेनैवोपपत्तेरिति ध्येयम् ।

**तत्सामानाधिकरण्यम्** — प्रतियोगिसामानाधिकरण्यम् । **स्ववि शिष्टे ति** । **स्वम्** यत्राभावे प्रतियोगिसामानाधिकरण्यं ग्राह्यं स एव । **हेत्वधिकरणावच्छेदेने ति** । हेतुतावच्छेदकसम्बन्धेन यद्धेतुतावच्छेदकावच्छिन्नाधिकरणं तत्सामान्यान्तर्भावेणेत्यर्थः । तेन वह्न्यभावस्य धूमावयवावच्छेदेन द्रव्यविशिष्टसत्तावित्यादौ द्रव्यत्वाभावस्य गुणाद्यवच्छेदेन प्रतियोगिसामानाधिकरण्यविरहेऽपि न क्षतिः । पर्वतादेः कालोपाधित्वानभ्युपगमे धूमत्वप्रकारकप्रमाविषयत्वाद्यभावस्य क्वचिदपि प्रतियोगिसामानाधिकरण्यस्योपपादयितुमशक्यतया धूमवान् वह्नेरित्यादावतिव्याप्तिप्रसक्तेः दर्शितविवक्षायाः स्थलान्तरे प्रयोजनमाह — **तेन गोत्वे ति** । **तद्वति** — गवादिमति । कालिकसम्बन्धेन गोत्वादिना गवादौ साध्ये प्रळयान्तर्भावेण व्यभिचारिणि गोत्वादिहेतौ लक्षणघटकानां गोत्वाद्यवच्छिन्नाभावानां गवादिमति एतत्काले गवाद्यनधिकरणदेशावच्छेदेन महाकाले च प्रळयावच्छेदेन वर्तमानतया प्रतियोगिसामानाधिकरण्यमक्षतमेव । एवं दैशिकविशेषणताविशेषेण गवादिव्यापक-

[दी] महाकाले वा वृत्तावपि "यदा गौस्त सदा गौ" "यदा कालत्वं तदा जन्यद्रव्य प्रत्याभावृत्तिवे" त्यादौ नातिप्रसङ्ग ,

---

प्रलयान्यत्वादेरभावोऽपि तेन सम्बन्धेन प्रलयान्यत्वादिमति महाकाले कालिकसम्बन्धेन वर्तमानतया प्रतियोगिसमानाधिकरण एव, प्रतियोगिसामानाधिकरण्यघटकीभूताभाववृत्तौ सम्बन्धविशेषानिवेशात् इत्यतिव्याप्तिस्स्यात् , निरुक्तविवक्षणे च हेतुविशिष्टसाध्यहेत्वधिकरणान्तर्गतप्रलयान्तर्भावेण तादृशाभावाना न प्रतियोगिसामानाधिकरण्यम् , प्रलये तत्प्रतियोगिनो ऽवृत्तेरिति समुदायार्थः । गवादिव्यापकस्य चरमध्वंसादेरभावस्य योऽनवच्छरमध्वंसादि तस्य गवादिमति खण्डकाले न प्रतियोगिसामानाधिकरण्यम् तत्र तस्यावृत्तेरित्यतो महाकालेत्युक्तम् । महाकाले च कालिकसम्बन्धेन वृत्तेस्तथात्वमक्षतमेव ।

गोसाध्यकस्थले साध्यव्यापकतावच्छेदकजन्यद्रव्यत्वप्रलयावृत्तित्वावच्छिन्नाभावमादायातिव्याप्तिवारण न सम्भवतीति स्फुटीकरणाय तद्रूपावच्छिन्नसाध्यक स्थले व्यतिव्याप्तिमाह – यदा कालत्व मित्यादिना । अथ एतादृशविवक्षापेक्षया लाघवात् प्रतियोगिसामानाधिकरण्यघटकाभावीयवृत्तौ दैशिकविशेषणताविशेषसम्बन्धावच्छिन्नत्वमेव निवेश्यताम् , तथा सति दैशिकविशेषणताविशेषसम्बन्धेन प्रलयान्यत्वादेरभावस्य प्रतियोगिसामानाधिकरण्यविरहेणातिव्याप्त्युद्धारस्य शक्यत्वात् । नचैवं वह्निमान् धूमादित्यादौ कालिकविशेषणताविशेषसम्बन्धेन हेत्वधिकरणवृत्तेः द्रव्यत्वादिना द्रव्यत्वादेरभावस्य दैशिकविशेषणतया द्रव्यवृत्तित्वाभावादव्याप्तिरिति वाच्यम् हेतुसामानाधिकरण्यशरीरेऽपि अभावीयवृत्तौ दैशिकविशेषणताविशेषसम्बन्धावच्छिन्नत्वस्य निवेशनीयत्वात् तावतापि लाघवात् । अत्र दैशिकविशेषणताविशेषेण प्रतियोगिसामानाधिकरण्य

विवक्षणेऽपि उक्तस्थलेऽव्याप्तिस्तदवस्थैव, प्रलयान्यत्वाभावस्य प्रलयमात्रवृत्तेरभावमात्राधिकरणकतया प्रलयात्मकाधिकरणस्वरूपत्वात् तस्य च प्रलयान्यत्वरूपप्रतियोग्यधिकरणपरमाण्वादौ दैशिकविशेषणतया वृत्तेरिति वाच्यम्, एवमपि प्रलयान्यकालत्वप्रकारकप्रमाविशेष्यत्वादेरभावस्य प्रलयातिरिक्तगगनादावपि वर्तमानस्य प्रलयानात्मकतया प्रतियोगिसामानाधिकरण्यस्य दुरुपपादतया अतिव्याप्त्यनवकाशात् ।

मैवम्, दैशिकविशेषणतया प्रतियोगिसामानाधिकरण्यनिवेशेऽपि दैशिकविशेषणतासम्बन्धेन प्रलयावृत्तिसाध्यके कालत्वादिहेतावतिव्याप्ति दुर्वारैव, तत्र प्रलयमात्रस्य व्यभिचारनिरूपकाधिकरणतया साध्यतावच्छेदकसम्बन्धेन साध्यं प्रति व्यापकतानवच्छेदिका यदभावीयप्रतियोगिता, व्यापकताघटकसम्बन्धावच्छिन्नप्रतियोगिताकस्य तस्य प्रलयमात्रवृत्तितया प्रलयात्मकत्वाविरहरीत्यैव प्रतियोगिसमानाधिकरणत्वात् इतरसम्बन्धावच्छिन्नाभावस्य प्रलयानात्मकत्वेऽपि प्रलयान्यवृत्तितया सुतरामेव प्रतियोगिसमानाधिकरणत्वादिति निरुक्तविवक्षणमावश्यकम्. एतदभिप्रेत्यैव प्रलयावृत्तिसाध्यकानुधावनं ग्रन्थकृत इति ।

वस्तुतस्तु, प्रलयादिमात्रवृत्तेरभावस्य प्रलयाद्यनात्मकत्वेऽपि दर्शितस्थलेऽप्युक्तविवक्षामन्तरेणातिव्याप्तिवारणमशक्यम्, प्रलयान्यत्वादेरभावस्यापि स्वप्रतियोगिनिष्ठव्यापकताघटकस्वरूपसम्बन्धेन प्रलयात्मकनानाध्वंसान्तर्गतस्य कस्यचिद्ध्वंसवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिनोऽधिकरणे ध्वंसान्तरे स्वस्य प्रतियोगिसमानाधिकरणत्वात्. यत्किञ्चिद्ध्वंसाधिकरणत्वाभावस्य यत्किञ्चिद्ध्वंसमात्रवृत्तेस्तद्ध्वंसवृत्तित्वविशिष्टस्वाभावाधिकरणे ध्वंसान्तरे असत्त्वेऽपि कालिकसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावस्य स्वानधिकरणध्वंसावच्छेदेन स्वाधिकरणेऽपि सत्त्वेन तत्रैव तत्प्रतियोगिसमानाधिकरणत्वात् प्रलयान्यविषयकत्वोपलक्षितप्रमाया विषयतासम्बन्धेन केवला-

[दी] हेतुमति प्रळये तत्सामानाधिकरण्याभावात् । "स्वविशिष्टे" ति विशेषणात् "कपिसंयोगाभाववान् मेयत्वा" दित्यादौ संयोगादात्मरूपसाध्याभावस्य सकलहेत्वधिकरणावृत्तित्वेऽपि नाव्याप्तिः ।

---

त्ववितया तादृशसम्बन्धावच्छिन्नतादृशप्रमाभावाप्रसिद्धेः, प्रळयान्यविषयकत्वविशिष्टप्रमाभावस्य प्रळये प्रसिद्धावपि प्रळये तदन्यविषयकनित्यप्रमारूपप्रतियोगिसमानाधिकरणत्वात् प्रळयाविषयकप्रमाभावस्य च जन्यप्रमामात्रप्रतियोगिकतया कालिकाव्याप्यवृत्तित्वेन प्रतियोगिमत्यपि तच्छून्यकालावच्छेदेन वृत्तेस्तादृशाभावमादायातिव्याप्तिवारणासम्भवात्, उक्तविवक्षणे तु प्रळये प्रळयाविषयकप्रमाभावस्य विषयतया प्रतियोगिसमानाधिकरणत्वविरहादतिव्याप्तिवारणसम्भवः, एवमुक्तरीत्या घटत्वाभाववान् मेयत्वादित्यादावपि व्यावृत्तिर्बोध्या ।

हेतुमति प्रळय इति । हेतुमत्सामान्यान्तर्गतप्रळयान्तर्भावेणेत्यर्थः । तत्सामानाधिकरण्याभावात् – गवादिरूपप्रतियोगिसामानाधिकरण्याभावात् । अत्र गवादेरभावस्येत्यनुपपद्यते । हेतुमति स्ववैशिष्ट्यनिवेशनफलमाह – स्वविशिष्टेती ति । साम्प्रदायिकरीत्ये संयोगसामान्याभावानभ्युपगमात् सद्धेतुत्वार्थं कपिसंयोगाभावपर्यन्तानुधावनम् । सकलहेत्वधिकरणावृत्तित्वेऽपी ति । नित्यगुणादौ केनापि सम्बन्धेन कपिसंयोगासत्त्वादिति भावः, एतेन हेत्वधिकरणसामान्यान्तर्भावेण प्रतियोगिसामानाधिकरण्यं नास्तीति सूचितम् । नाव्याप्तिरिति । नित्यगुणादेः स्वविशिष्टत्वाभावात्तदन्तर्भावेण अतथात्वेऽपि स्वविशिष्टहेत्वधिकरणान्तर्भावेण तथात्वस्याक्षतत्वात् । अत्र व्यापकताघटकाभावे उक्तयुक्त्या प्रतियोगिवैयधिकरण्यस्य निवेशनीयतया साध्यवद्यत्किञ्चिद्व्यक्तयसम्बद्धस्वविशिष्टसामान्यकाभिन्नत्वरूपव्यापकतावच्छेदकत्वस्य निवेशनीयतया वा

कपिसंयोगाभावादिनिष्ठप्रतियोगितायाः अपि व्यापकतावच्छेदकता-निर्वाह इत्यभिप्रेत्य कपिसंयोगाद्यात्मकाभावमादायाव्याप्तिराशङ्किता, अन्यथा पुनः सत्तावान् जातेरित्यादौ काले कालिकसम्बन्धेन हेतुसमानाधिकरणानां सत्तात्वाद्यवच्छिन्नाभावानां हेत्वधिकरणसामान्यान्तर्गतगगनाद्यन्तर्भावेण प्रतियोगिसामानाधिकरण्यविरहात् प्रसक्ताव्याप्तेर्वारणाय स्व-विशिष्टे ति विशेषणमावश्यकमिति. आदिपदग्राह्यमपि तादृशस्थलमेवेत्यपि बोध्यम् ।

अत्र तु साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः यद्धेतुतावच्छेदकविशिष्टाधिकरणसामान्यान्तर्भावेण यत्र कुत्रचित् तत्प्रतियोगिसामानाधिकरण्यकाः साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताका यावन्तोऽभावाः यद्रूपविशिष्टाधिकरणत्वव्यापकतावच्छेदकप्रतियोगिताकाः तद्रूपवत्त्वमित्यादिकं तादृशाभावे हेतुसामानाधिकरण्यविशेषणाघटितं हेत्वधिकरणे स्वविशिष्टत्वविशेषणाघटितं च व्यधिकरणधर्मावच्छिन्नाभावघटितं लघुलक्षणं सम्भवतीति बोध्यम् ॥

इति प्रथमस्वलक्षणम् ।

---

## अथ द्वितीयस्वलक्षणम् ।

ननु धूमवान् वह्नेरित्यादौ अतिव्याप्तिः, धूमाभावादेरपि अयोगोळकादौ गोत्वाभावरूपप्रतियोगिसमानाधिकरणत्वात् ; गोत्वाद्यभावस्य तत्प्रतियोगित्वं च धूमाभावे जलवृत्तित्वविशिष्टगोत्वाभावो नास्तीति प्रतीतिनियामकाभावस्याभावाधिकरणकाभावप्रतियोगिकाभावतया अधिकरणीभूतधूमाभावस्वरूपत्वात् जलवृत्तित्वविशिष्टगोत्वाभावस्य शुद्धविशेष्यानतिरिक्तत्वादित्याशङ्क्य जलवृत्तित्वविशिष्टगोत्वाभावाभावस्य धूमाभावानतिरिक्त

[टी] जलादिवृत्तित्वविशिष्टगोत्वाद्यभावस्याभावो जलत्वाद्यभाव एव, न तु धूमाद्यभाव, जलादावपि तदभावप्रत्ययप्रसङ्गात् ।

---

बलसामान्यस्वरूपता प्रदर्शयन् तत्स्वरूपतां प्रतिक्षिपति— जले त्यादिना । नच धूमाभावस्य प्रतियोगिनिष्ठव्यापकताघटकयावत्सम्बन्धान्तर्गतसंयोगसम्बन्धेन प्रतियोगिसामानाधिकरण्यविरहात् कथमतिव्याप्तिशङ्केति वाच्यम्, जलवृत्तित्वविशिष्टगोत्वाभावद्रव्यान्यतराभावस्याप्युक्तयुक्त्या धूमाभावस्वरूपतासम्भवात् संयोगसम्बन्धेन द्रव्यात्मकप्रतियोगिनैव सामानाधिकरण्यसत्त्वात् । नचैव जलवृत्तिद्रव्यमेव तत्प्रतियोगि, तस्यैव प्रतियोगितावच्छेदक जलवृत्तित्ववैशिष्ट्याक्रान्तत्वात् तस्य च धूमाभावविशिष्टसकलवह्निमति वृत्तौ मानाभावान्नातिव्याप्तिप्रसक्ति, यदि च जलवृत्तित्ववैशिष्ट्यमन्यतरत्वघटकीभूतमदप्रतियोगिनि गोत्वाभावत्वावच्छिन्न एव विशेषणम्, न तु अन्यतरत्वावच्छिन्ने विशेषणतया प्रतियोगितावच्छेदकमिति जलवृत्तिद्रव्यस्यापि तत्प्रतियोगित्वमित्युच्यते*, तदा तादृशाभावस्य विशिष्टाभावात्मकतया अन्यतरत्वरूपप्रतियोगितावच्छेदकविशिष्टगोत्वाभावाधिकरणधूमाभावाधिकरणत्वानुपपत्तिरिति वाच्यम्, जलवृत्तिद्रव्य धूमाभावविशिष्ट यादृशाद्यधिकरणे नियमतो वर्तते, तादृशव्यभिचारिहेतुकस्थल एव धूमाभावात्मकानिरुक्त विशिष्टाभावप्रतियोगिद्रव्यसामानाधिकरण्यमादायाऽतिव्याप्तिमाशङ्क्य जलादिवृत्तित्वे त्यादि ग्रन्थस्यावतारणीयत्वात् । नचैव तादृशान्यतराभावस्यैव धूमाभावस्वरूपताप्रतिक्षेप उचितइति विशिष्टगोत्वाद्यभावस्याभाव इति ग्रन्थासङ्गतिर्दुर्वारैवेति वाच्यम्, तादृशग्रन्थस्यापि गोत्वाभावप्रतियोगिकाभावत्वेन रूपेण जलवृत्तित्वविशिष्टतादृशान्यतरत्वावच्छिन्नप्रतियोगिताकाभावपरत्वात् । नचैवमप्ययोगोलकभेदाभावस्यायोगोलकत्वादिरूपभावात्मकस्य स्वनिष्ठजलवृत्तित्वविशिष्टगोत्वाभावाभावस्वरूपत्वाविरहात् तस्य प्रतियोगिसामानाधिकरण्य न घटत इत्यति या

प्यप्रसक्तिः, साध्यतावच्छेदकसम्बन्धेन व्यापकताया लक्षणघटकत्वं प्रागेव दूषितम्, अतो नायोगोलकभेदाभावस्य लक्षणघटकत्वसम्भव इति वाच्यम्, अयोगोलकभेदाभावादेरपि पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यसम्भवात् । नचैवं धूमाभावस्य गोत्वाभावाद्यप्रतियोगिकत्वेऽपि पूर्वक्षणवृत्तित्वविशिष्टस्वाभावरूपप्रतियोगिसामानाधिकरण्यसत्त्वादतिव्याप्ति - तादवस्थ्यमिति वाच्यम्, तादृशप्रतियोगिनः स्वप्रतियोगिनिष्ठव्यापकता-घटक यावत्सम्बन्धान्तर्गतसंयोगादिना सामानाधिकरण्यविरहात् घटत्वाभाववान् गेयत्वादित्यादावपि घटत्वाभावादिप्रकारकप्रमाभावस्य यावद्व्यापकताघटकसम्बन्धान्तर्गतविशेष्यतासम्बन्धेन प्रतियोगिसामानाधिकरण्यविरहेणातिव्याप्त्यनवकाशात् । नचैवं जलवृत्तित्वविशिष्टगोत्वाभावद्द्रव्यान्यतराभावस्य धूमाभावस्वरूपतया संयोगेन प्रतियोगिसामानाधिकरण्यसम्भवेऽपि धूमादिप्रकारकप्रमाभावस्य यावद्व्यापकताघटकसम्बन्धान्तर्गतविशेष्यतासम्बन्धेन प्रतियोगिसामानाधिकरण्याभावात् धूमवान् वह्नेरित्यादावतिव्याप्त्यप्रसक्त्या तादृशाभावस्य धूमाभावस्वरूपताप्रतिक्षेपो न युक्त इति वाच्यम्, तादृशाभावस्य तत्स्वरूपत्वे तुल्ययुक्त्या धूमादिप्रकारकप्रमाभावनिष्ठस्य जलादिवृत्तित्वविशिष्टगोत्वाभावद्द्रव्यत्वप्रकारकप्रमान्यतराभावस्य तत्स्वरूपतया द्रव्यत्वप्रकारकप्रमाया अपि तत्प्रतियोगित्वेन तत्रैव समं विशेष्यतासम्बन्धेन तादृशाभावस्य सामानाधिकरण्यसत्त्वादतिव्याप्तिप्रसक्तेरिति । नन्वेवमपि धूमवान् वह्नेरित्यादावतिव्याप्तिर्दुर्वारैव, उक्ताभावस्य जलत्वाद्यभावस्वरूपत्वे तु तुल्ययुक्त्या धूमवद्वृत्तित्वविशिष्टतादृशाभावस्य धूमाभावस्वरूपत्वेन द्रव्यसामान्यस्य तत्प्रतियोगित्वानपायात्; एवं धूमाद्यभावस्य धूमत्वादिना प्रमेयसामान्याभावसमनियतत्वेन तत्तदभिन्नत्वोपगमात् प्रमेयमात्रस्यैव तत्प्रतियोगित्वात् । यदि च धूमत्वादिना प्रमेयं नास्तीत्यादिप्रतीतौ धूममात्रस्यैव प्रतियो-

गितत्वात् न प्रमेयाद्यस्य, अथवा प्रतियोगितासामानाधिकरण्यशरीरे व्याप्यवृत्तिसमानाधिकरणधर्मानवच्छिन्नप्रतियोगिता निवेशनीया, एवञ्च तादृशप्रतियोगिताश्रयः हेतुसमानाधिकरणाभावो अत्र, यावत्प्रमेयनिष्ठप्रतियोगिता न तथाविधवृत्तिमत्त्वावच्छिन्नैव तादृशधर्मानवच्छिन्ना च धूमादिसाध्यवृत्तिधूमत्वाद्यभावप्रतियोगितैव तदाश्रयसामानाधिकरण्यञ्च साध्येऽक्षुण्णतर्भावेनेति भण्यते? तदापि धूमाभावस्य वह्निधूमोभयत्वावच्छिन्नाभावसमनियततया तदवच्छिन्नत्वेन वह्नेरपि तदभावप्रतियोगितया अयोगोलकान्यत्वाभावस्य अयोगोलकाव्यवृत्तित्वविशिष्टाकाशाभावाभावसमनियततया तदभिन्नेनाकाशाभावस्यापि तत्प्रतियोगितया धूमवत्त्वप्रकारकप्रमाभावस्य धूमवद्विशेष्यकत्वविशिष्टद्रव्यत्वादिप्रकारकप्रमाभावसमनियततया द्रव्यत्वादिप्रकारकप्रमाया अपि तत्प्रतियोगित्वेन धूमभेदस्य धूमत्वमनुमयत्वावच्छिन्नाभावसमनियतत्वेन सामान्यस्यैव तत्प्रतियोगितया हेतुसमानाधिकरणतादृशाभावानां स्वविशिष्टयावद्धेत्वधिकरणान्तर्भावेन दर्शितप्रतियोगिभिः सामानाधिकरण्यमक्षतमेवेत्यतिव्याप्तिः ।

अथ साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदिका या या प्रतियोगिता तत्तन्निरूपकाभावानां स्वविशिष्टयावद्धेत्वधिकरणान्तर्भावेन तत्तत्प्रतियोगिताश्रयसामानाधिकरण्यं विवक्षणीयमिति नातिव्याप्तिरिति चेत्? तर्हि तादृशी या या प्रतियोगिता तदाश्रयसामानाधिकरण्यं यत्र क्वचिद्यावद्यदधिकरणान्तर्भावेन तत्त्वमित्येतावतैव सामञ्जस्ये अभावे यावत्त्वस्य तत्तत्प्रतियोगितानिरूपकत्वस्य हेतुसामानाधिकरण्यस्य विशेषणस्य हेत्वधिकरणे च स्वविशिष्टत्वविशेषणस्य वैयर्थ्यप्रसङ्ग, एवं सर्वत्र हेतुसमानाधिकरणमुभयत्वावच्छिन्नप्रतियोगिताक साध्याभावमादाय लक्षणसमन्वयसम्भवात् व्यधिकरणधर्मावच्छिन्नाभावस्याऽप्रामाणिकत्वेऽपि क्षतिविरहेण एतादृशान्याप्तिलक्षणशङ्काया प्रतियोग्यवृत्तित्वेत्यादिना तादृशाभावखण्डन

[दी] यत्समानाधिकरणानां साध्यतावच्छेदकावच्छिन्नव्यापकता वच्छेदकरूपावच्छिन्नप्रतियोगिताकानां यावतां मभावानां प्रति योगितावच्छेदकावच्छिन्नसामानाधिकरण्यं तत्वं वा तत्.

---

स्याऽसङ्गत्यापत्तिः; अतो लक्षणान्तरमाह — यत्समानाधिकरणाना मिति । अत्रापि यत्तत्पदयोः पूर्ववत् यत्तद्धर्मावच्छिन्नपरता बोध्या, वह्निमान् धूमादित्यादौ साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकधर्मा वच्छिन्नप्रतियोगिताकाभावा वह्नित्वादिना घटाद्यभावा एव, तेषाञ्च स्वविशिष्टयावद्धेत्वधिकरणान्तर्भावेन वह्नित्वादिरूपप्रतियोगितावच्छेदका वच्छिन्नसमानाधिकरणतया लक्षणसमन्वयः । अत्रापि प्रतियोगिसामा नाधिकरण्यनिवेशे उक्तक्रमेण धूमवान् वह्नेरित्यादावतिव्याप्तिः, अतः प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यनिवेशः, तथाच धूमाघभा वानां वह्निधूमोभयत्वावच्छिन्नप्रतियोगिताश्रय वह्न्यादिसामानाधिकरण्य सत्त्वेपि प्रतियोगितावच्छेदकीभूत तादृशोभयत्वावच्छिन्न सामानाधिकरण्या भावान्नातिव्याप्तिः । एवं तादृशाभावाधिकरणकधूमवद्वृत्तित्वविशिष्टगोत्वा भावद्रव्यान्यतराभावस्य धूमाभावस्वरूपत्वेपि तादृशाभावप्रतियोगितावच्छे दक धूमवद्वृत्तित्वविशिष्टत्वावच्छिन्नेन समं तादृशाभावस्य स्वविशिष्ट- हेत्वधिकरणान्तर्भावेन प्रतियोगिसामानाधिकरण्यविरहान्नातिव्याप्तिः. द्रव्य त्वेन धूमो नास्तीत्यादिप्रतीतौ च द्रव्यत्वादेः प्रतियोगितावच्छेदकत्वं न भासते, अपि तु धूमत्वादेरेव, द्रव्यत्वादेस्तु तृतीयोल्लिखितवैशिष्ट्यमात्रं धूमादौ भासत इत्युपेयते, अतः तादृशप्रतीतिविषयाभावस्य धूमाभा वादिसमनियततया तत्प्रतियोगितावच्छेदकं द्रव्यत्वादिकमपि धूमाभाव प्रतियोगितावच्छेदकमिति प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्य निवेशेप्यतिव्याप्तेः दुर्वारता इत्याशङ्काया नावकाशः ।

एतेन धूमकालावच्छिन्नधूमवद्वृत्तित्वविशिष्टस्य वह्नित्वरूपेण यो-ऽभावस्तस्य धूमाभावसमनियततया वह्नित्वमपि धूमाभावप्रतियोगितावच्छे-दकमित्यपास्तम् ; वह्नित्वेन तादृशधूमवद्वृत्तित्वविशिष्टं नास्तीति प्रतीतौ तादृशधूमवद्वृत्तित्वविशिष्ट्यस्यैव प्रतियोगितावच्छेदकत्वावगाहनोपग मात् ; अन्यथा धूमवद्वृत्तित्वविशिष्टवह्निमति धूमशून्ये वह्नित्वरूपप्रति-योगितावच्छेदकविशिष्टवह्निरूपप्रतियोगिसत्त्वेन तादृशप्रतीत्यनुदयप्रस-ङ्गात् . अस्तु वा तत्र तादृशवैशिष्ट्यादित्यस्यैव वह्नित्वस्य तथात्वम् , तावतापि न क्षति . प्रतियोगितावच्छेदकपदस्य प्रतियोगितावच्छेदकता पर्याप्त्यधिकरणार्थकत्वात् ।

अथैवमपि घटभिन्नत्वेन धूमघटान्यतरत्वास्तीत्यत्र घटधूमान्य-तरत्वमात्रस्य न प्रतियोगितावच्छेदकत्वभानम् , धूमशून्ये घटवति तादृशप्रतीत्यनुपपत्तेः ; नापि घटभिन्नत्वसहितस्य तस्य; गौरवात् ; किन्तु घटभिन्नत्वमात्रस्यैव, एवंच तादृशाभावस्य धूमाभावसमनियत तया धूमाभावस्यापि घटभिन्नत्व प्रतियोगितावच्छेदकम् , एवं भेदत्वेन अयोगोळकभेदघटान्यतराभावान्यतराभावस्यायोगोळकभेदत्वावच्छिन्नाभाव -समनियततया भेदत्वमप्ययोगोळकभेदाभावप्रतियोगितावच्छेदकम् , एवं द्रव्यत्वभिन्नत्वेन द्रव्यत्वधूमत्वान्यतराभावस्य धूमभेदसमनियततया द्रव्य-त्वभिन्नत्वमपि धूमभेदप्रतियोगितावच्छेदकम् , तादृशधर्मावच्छिन्नाभाव अयोगोळकादावपि सत्वान्निव्याप्तिस्तदवस्थैवेति चेत् ? तर्हि प्रतियोगिता वच्छेदकत्वेन प्रतियोगितायाः न्यूनवृत्तिभिन्नं सत् यदवच्छेदकं तदेव विवक्षणीयम् , न्यूनवृत्तित्वञ्च स्वसमानाधिकरणभेदप्रतियोगिता वच्छेदकत्वे सति स्वसमानाधिकरणत्वम् , सद्भिन्नत्वञ्च व्यधिकरणधर्म-साधारणम् ; घटधूमान्यतरादिनिष्ठप्रतियोगिताया न्यूनवृत्त्येव घटभिन्न-त्वादिकम् . नच वह्नित्वेन प्रमेयं नास्तीत्यत्र प्रमेयसामान्यवृत्तित्वेन

वह्नित्वावच्छिन्नप्रतियोगिता या प्रतीयते, वह्निर्नास्तीत्यत्रापि वह्निवृत्तितया सैव प्रतीयत इत्युपेयते, एकधर्मावच्छिन्नभिन्नप्रतियोगिताकल्पने गौरवात्, तथाच कालिकादिसम्बन्धेन हेतुसमानाधिकरणवह्नित्वावच्छिन्नवह्न्याद्यभावप्रतियोगितायाः न्यूनवृत्तिभिन्नावच्छेदकत्वाप्रसिद्ध्या अव्याप्तिरिति वाच्यम्, वह्नित्वेन प्रमेयं नास्तीति प्रतीतौ प्रमेयत्वविशेषितस्य वह्नेरेव प्रतियोगिता भासते नान्यस्येत्यभ्युपगमात् तादृशाभावप्रतियोगितायाः प्रमेयसामान्यवृत्तित्वस्यैवासिद्धेः ।

अथवा प्रतियोगितावच्छेदकपदं प्रतियोगिताया अनतिरिक्तवृत्ति सत् यदवच्छेदकं तत्परम्, अनतिरिक्तवृत्तित्वञ्च स्वव्यापकतत्कान्यत्वतत्सामानाधिकरण्योभयाभाववत्त्वम्, तथात्वं च व्यधिकरणधर्मसाधारणमपि, घटत्वगगनत्वादिनिष्ठप्रतियोगितायाश्च अतिरिक्तवृत्त्येव घटभिन्नत्वादिकम्, तादृशप्रतियोगिताया यावद्घटभिन्नादिसाधारण्यप्रसक्तेः वह्नित्वावच्छिन्नप्रतियोगितायाः प्रमेयसामान्यवृत्तित्वेऽपि तदनतिरिक्तवृत्त्यवच्छेदकं वह्नित्वादिकमेव, स्वव्यापकतत्कान्यत्वस्याप्रसिद्धत्वादिति नानुपपत्तिगन्धोऽपीति * [ प्रतियोगिताया स्वन्यूनवृत्तिभिन्नाया यदवच्छेदकं तदवच्छिन्नसामानाधिकरण्यं विवक्षितम्, न्यूनवृत्तित्वं च सामानाधिकरण्यघटितमिति व्यधिकरणधर्मपरिग्रहः ।] तत्प्रतियोगितासमानाधिकरणं सत् तत्प्रतियोगितानिरूपकाभाववद्वृत्तितावच्छेदकं यत् तदन्यप्रतियोगितावच्छेदकत्वं निवेश्यम् । एतल्लक्षणे साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावनिवेशे वह्निमान् धूमादित्यादौ वह्नित्वादिना घटाभावसमनियतत्वेन घटत्वादिना वह्न्याद्यभावस्य हेत्वधिकरणावच्छेदेन वह्न्यादिरूपप्रतियोगिसामानाधिकरण्यसम्भवेऽपि वह्निघटोभयत्वावच्छिन्नाभावस्यापि तथाविधतया तस्य प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्याभावेन असम्भव इत्यतो व्यापकतावच्छेदकरूपावच्छिन्नप्रति

* कुण्डलितश्च क्वचिन्न नात्यावश्यकश्च ।

योगिताकत्वमुक्तम् , अत एव व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगमे हेतुसमानाधिकरणस्य साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभावस्याऽप्रसिद्ध्याऽसम्भव अयमात्मा ज्ञानादित्यादौ केवलान्वयिसाध्यकेऽव्याप्तिर्वा भवतीत्यभिप्रायकतया प्रतियोग्यवृत्तित्वेत्यादि ग्रन्थसङ्गतिः. नच अयमात्मा ज्ञानादित्यादौ पूर्वक्षणवृत्तित्वविशिष्टात्मत्वस्यात्मत्वादिव्यापकतावच्छेदकतया तदवच्छिन्नाभावस्य उत्तरक्षणावच्छेदेन हेतुसमानाधिकरणतया "इदं वाच्यम् ज्ञेयत्वा" दित्यादावपि एतत्क्षणान्यवृत्तित्वविशिष्टवाच्यत्वत्वादेर्विषयतासम्बन्धेन जन्यज्ञानत्वविशिष्टविषयकअन्यज्ञाननिष्ठतद्व्यक्तित्वादेः साध्यव्यापकतावच्छेदकतया तदवच्छिन्नाभावस्यैतत्क्षणावच्छेदेन प्रलयावच्छेदेन च हेतुसमानाधिकरणतया व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगमेऽपि न तादृशाभावाप्रसिद्धिरिति वाच्यम्, प्रतियोगिवैयधिकरण्याघटितव्यापकताया एव निवेशनीयतया निरुक्तधर्मावच्छिन्नाभावानामपि साध्यवति सत्त्वेन तादृशधर्माणां व्यापकतावच्छेदकत्वासम्भवात्। नच साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाव एव किं न निवेश्यते? प्रमेयसाध्यकस्थले संयोगसमवायादिरूपव्यधिकरणसम्बन्धावच्छिन्नप्रमेयत्वादिनिष्ठप्रतियोगितावच्छेदकताकाभावमादाय लक्षणसमन्वयसम्भवादिति वाच्यम्, तथा सति लघुरूपसमनियतगुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वेन तद्रूपावच्छिन्नसाध्यके तथाविधाभावाप्रसिद्ध्या अव्याप्त्यापत्तेः ।

अत्र च ज्ञानवानात्ममहाकालान्यतरत्वादित्यादौ अतिव्याप्तिवारणाय साध्यतावच्छेदकसम्बन्धेन व्यापकत्वं तेनैव सम्बन्धेन प्रतियोगिसामानाधिकरण्यं विवक्षणीयम् , महाकालान्यत्वविशिष्टघटादिसाध्यकस्थले कालत्वादेर्व्यभिचारित्वेऽपि तत्र हेतुसमानाधिकरणस्य महाकालान्यत्वविशिष्टघटाद्यभावस्य प्रतियोगितावच्छेदकविशिष्टसामानाधिकरण्याभावेनानिया

भिसम्भवात् । तादात्म्यसम्बन्धेन प्रमेयसाध्यकस्थले तादृशसम्बन्धेन साध्य प्रति तादृशसम्बन्धेन व्यापकतायामवच्छेदकीभूतो यः प्रमेयत्वादिरूप केवलान्वयिधर्मः तदवच्छिन्नस्य संयोगसमवायिविषयित्वादिसम्बन्धावच्छिन्ना भावमादायैव लक्षणसमन्वयसम्भवात् अभावप्रतियोगितायाः साध्यता वच्छेदकसम्बन्धावच्छिन्नत्वस्य प्रयोजनविरहेणानिवेशात् ; तन्निवेशेपि व्यधिकरणसमवायित्वावच्छिन्नप्रतियोगितावच्छेदकताक प्रमेयत्वादिमद्भेद मादाय लक्षणसमन्वयसम्भवात् । " समवायितया वाच्यत्ववद्भेदोऽपि द्रष्ट व्य " इति मिश्रोक्त्या तादृशभेदस्यापि सौन्दडसम्मतत्वादिति केचित् तदसत्, घटत्वाभाववान् मेयत्वादित्यादौ पूर्वोक्तादिशाऽतिव्याप्तेः । स्वप्रति योगितावच्छेदकावच्छिन्नव्यापकताघटकत्वाख्यसम्बन्धेन प्रतियोगितावच्छेद कावच्छिन्नसामानाधिकरण्यनिवेशनमपि न सत् , तथा सति " इदं वाच्यं ज्ञेयत्वा " दित्यादौ विषयतासंयोगादिसम्बन्धावच्छिन्नप्रतियोगिताका भावमादाय व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगमेपि लक्षणसामञ्जस्यात् प्रतियोग्यवृत्तिश्चे त्यादिग्रन्थासङ्गते । एतेन— विषयतासम्बन्धेन व्याप कता, तेन सम्बन्धेन प्रतियोगिसामानाधिकरण्यं विवक्षणीयम् , साध्य वत्त्वप्रकारकप्रमात्वावच्छिन्नाभावमादाय सर्वत्र लक्षणसङ्गमसम्भवेऽतिव्याप्ति निरासश्चेति निरस्तम्, ज्ञेयत्ववत्वादिना वाच्यत्वादीनामभाव इत्येता दृशग्रन्थासङ्गतेश्च ज्ञेयत्वस्य ज्ञानविषयतात्मकस्य विषयतासम्बन्धेना व्यापकत्वात् । किन्तु स्वप्रतियोगितावच्छेदकसम्बन्धेन व्यापकत्वम् , तेनैव प्रतियोगितावच्छेदकावच्छिन्नभावसामानाधिकरण्य विवक्षणी यम् , व्यभिचारिणि साध्याद्यभावस्य विशेषणताविशेषेण किञ्चि द्विशिष्टस्वाभावानिष्ठप्रतियोगितावच्छेदकतादृशाभावत्वरूपप्रतियोगितावच्छेद कावच्छिन्नसामानाधिकरण्येपि तदवच्छिन्नभावसामानाधिकरण्याभावात् नाति

व्याप्ति किञ्चिद्विशिष्टस्य स्वस्य योऽभावः सामानाधिकरण्यसम्बन्धेन तद्विशिष्टस्य अभावश्च विशिष्टत्वसमनियतोऽपि स्वस्मादतिरिक्त एव, अभावमात्रप्रतियोगितानामात्मन्येव तदभावप्रतियोगिस्वरूपतया सिद्धान्तसिद्धत्वात् , अतो धूमाद्यभावस्य सामानाधिकरण्यसम्बन्धेन ह्रदादिवृत्तित्वविशिष्टधूमाद्यभावाभावविशिष्टत्वावच्छिन्नाभावसामानाधिकरण्ये पि न क्षति ।

( वस्तुतस्तु प्रतियोगितावच्छेदकावच्छिन्ने भावत्वमनिवेश्य प्रतियोगितावच्छेदके अभावावृत्तित्वमेव निवेश्यम्, तादृशविशिष्टत्वञ्चाभावसाधारणमिति । )

यावदभावाना मित्यत्राप्यभावपदं भावभिन्नपरम् , अत कालिकादिसम्बन्धेन हेतुसमानाधिकरणस्य वह्न्यादिव्यापकतावच्छेदकह्रदत्वाद्यभावत्वावच्छिन्नप्रतियोगिताकस्य ह्रदत्वादे स्वप्रतियोगितावच्छेदकावच्छिन्नाभावसामानाधिकरण्यासम्भवेपि न क्षति , नच ह्रदत्वाभावाभावस्य ह्रदत्वाभावप्रकारकप्रमाविषयत्वाभावसमनियततया स्वप्रतियोगितावच्छेदकतादृशप्रमाविषयत्वत्वावच्छिन्नाभावसामानाधिकरण्यमस्त्येवेति वाच्यम् , तस्य भावतया भिन्नत्वात् । एवञ्च सति कपिसंयोगाभाववान् मेयत्वादित्यादौ कपिसंयोगात्मकाभावस्य लक्षणाघटकत्वेपि विलक्षणैव "स्वविशिष्टे" त्यस्य सार्थकता पूर्वोक्तदिशाऽवसेया ।

नच भावभिन्नाभावविवक्षणेपि अयमात्मा ज्ञानादित्यादौ दैशिकविशेषणतया हेतुसमानाधिकरणस्य साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकी भूतकालिकसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभावत्वावच्छिन्नप्रतियोगिताकस्य आकाशाभावादे स्वप्रतियोगितावच्छेदकावच्छिन्नाभावसामानाधिकरण्यासम्भवाल्लक्षणसमन्वयासम्भव इति वाच्यम् , आकाशाभावीय

तादृशाभावत्वस्य दैशिकविशेषणतया साध्यवद्वृत्तेराकाशाभावस्य प्रतियोगितावच्छेदकतया साध्यव्यापकतावच्छेदकत्वविरहेण तदवच्छिन्नाभावस्य लक्षणाघटकत्वात्; अस्तु वा व्यापकतावच्छेदकरूपाश्र एव भाववृत्तित्व विशेषणम्, इदं वाच्य ज्ञेयत्वादित्यादौ च व्यधिकरणसम्बन्धावच्छिन्न प्रतियोगिताकवाच्यत्वाद्यभावस्य प्रतियोगितावच्छेदकं न प्रतियोगितावच्छेदकसम्बन्धघटितव्यापकतावच्छेदकम्, अतस्तादृशाभावस्य न लक्षण घटकतेति नोक्त प्रतियोग्यवृत्तित्वे त्यादिग्रन्था ऽसङ्गति रिति।

नच प्रतियोगितावच्छेदकसम्बन्धेन व्यापकताविवक्षणेपि इदं वाच्यं ज्ञेयत्वादित्यादौ विषयितादिसम्बन्धेन वाच्यत्वत्वादिमतो ज्ञानादेर्यः स्वरूपसम्बन्धेन अभावस्तस्य स्वप्रतियोगितावच्छेदकीभूतस्वरूपसम्बन्ध घटितवाच्यत्वनिष्ठव्यापकतावच्छेदकवाच्यत्वत्वावच्छिन्नप्रतियोगिताकत - या हेतुसमानाधिकरणतया स्वरूपसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्न वाच्यत्वादिसमानाधिकरणतया च तत्र व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगममपि तमादायैव लक्षणसामञ्जस्यमिति तादृशग्रन्थासङ्गतितादवस्थ्य-मिति वाच्यम्, धूमवान् वह्नेरित्यादौ संयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकधूमाद्यभावस्य कालिकसम्बन्धेन धूमत्वादिविशिष्टवह्न्यादिना संयोगेन — समवायसम्बन्धावच्छिन्नप्रतियोगिताकस्य अयोगोळकवृत्तिजातित्वाद्यवच्छिन्नाभावस्य कालिकादिसम्बन्धेन तादृशजातित्वादिविशिष्टायोगोळकीयरूपादिना समं समवायेन स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकस्य धूमवत्त्वप्रकारकप्रमाविषयत्वाद्यभावस्य कालिकादिसम्बन्धेन तादृशविषयत्वत्वादिविशिष्टसंयोगादिध्वंसेन अनुयोगिताविशेषसम्बन्धेन तादृशविषयत्वत्वादिविशिष्टतादृशविषयत्वाद्यभावेन च समं स्वरूपसम्बन्धेन विषयतासम्बन्धावच्छिन्नप्रतियोगिताक धूमवत्त्वप्रकारकप्रमाद्यभावस्य विषयितासम्बन्धेन कालिकसम्बन्धेन वा तादृशप्रमात्वादिविशिष्टं ह्रदयोगोळकादि

नच वाच्यत्वाभावस्तादृशो घट इति चेत्, तर्हि तादृशसाध्याभावसामानाधिकरण्याभावो व्याप्तिः, तथाचाप्रसिद्धिः। प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदकः

---

ज्ञेयत्वत्वादिना वाच्यत्वादीनामभाव स्सुलभ एव, शेषं दर्शितदिशाऽवसेयमित्यत आह— प्रतियोग्यवृत्तिश्चे ति।

---

विषयकज्ञान तेन सम विषयतासम्बन्धेन सामानाधिकरण्यसत्वादित्याशङ्कारणाय प्रतियोगितावच्छेदकत्वघटकसम्बन्धेनैव प्रतियोगितावच्छेदकविशिष्टत्वस्य विवक्षणीयतया वह्निमान् धूमादित्यादौ विषयितासम्बन्धेन द्रव्यत्वत्वादिमत समवायादिसम्बन्धावच्छिन्नाभावस्य स्वप्रतियोगितावच्छेदकसमवायादिसम्बन्धघटित द्रव्यत्वादिनिष्ठव्यापकताया स्वरूपसम्बन्धेन अवच्छेदकीभूतो यो द्रव्यत्वत्वादि तदवच्छिन्नप्रतियोगिताकस्य स्वप्रतियोगितावच्छेदकत्वघटकविषयितादिसम्बन्धेन प्रतियोगितावच्छेदकविशिष्टज्ञानादिना सम हेत्वधिकरणे स्वप्रतियोगितावच्छेदकसमवायादिना सामानाधिकरण्य न सम्भवतीति व्यापकतावच्छेदकताया(म)पि स्वप्रतियोगितावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्यावश्य निवेशनीयत्वेन इद वाच्य ज्ञेयत्वादित्यादौ दर्शिताभावाना लक्षणाघटकत्वादिति दिक्।

नन्वत्र लक्षणे गगनाभावत्वादिना वाच्यत्वाद्यभावीयसमवायित्वादिरूपप्रतियोगितावच्छेदकस्य वाच्यत्वादिव्यापकतानवच्छेदकत्वात् वाच्यत्वादिसाध्यकस्थले न तादृशाभावाना लक्षणघटकता, तथाच तत्र तादृशाभाव एव दुर्लभ इत्यत आह— ज्ञेयत्वत्वादिने ति। वाच्यत्वादीनामित्यादि पदात् पदार्थान्तरस्य परिग्रह। शेष मिति [illegible] मभिप्रेत्य नह्रे

स्वाधिकरणान्तर्भावेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्याविवक्षणं हेतुसामानाधिकरण्यादिशरीरे सम्बन्धविशेषनिवेशेन तत्प्रयोजनञ्चेत्यर्थः । अत्र च निरुक्ताभावेषु स्वविशिष्टहेत्वधिकरणसामान्यान्तर्भावेन प्रतियोगितावच्छेदकावच्छिन्नसामानाधिकरण्यनिवेशापेक्षया प्रतियोगिवृत्तित्वमेव निवेशयितुमुचितम्, सद्धेतौ व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाना तादृशाभावाना केवलान्वयितया प्रतियोगिन्यपि वृत्तेर्लक्षणसमन्वयसम्भवात्; वह्निमान् धूमादित्यादौ कालिकादिसम्बन्धेन हेतुसमानाधिकरणस्य रूपान्यत्वप्रकारकप्रमाविषयत्वाद्यभावस्य दैशिकविशेषणतया हेतुसामानाधिकरण्यनिवेशेन वह्न्यादिभेदस्य प्रतियोगितावच्छेदकतादृश्यसम्बन्धघटितसाध्यव्यापकतावच्छेदकावच्छिन्नप्रतियोगिताकत्वविरहेण लक्षणाघटकतया प्रतियोग्यवृत्तित्वेऽपि क्षतिविरहात्. कपिसंयोगाभाववान् मेयत्वादित्यादौ कपिसंयोगादेरुक्तरीत्या व्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वविरहेण दैशिकविशेषणतया हेतुसामानाधिकरण्याभावेनाऽभावेभावभिन्नत्वविरहेण च लक्षणाघटकतया प्रतियोग्यवृत्तित्वेऽपि न क्षति. । धूमवान् वह्नेरित्यादौ धूमाद्यभावस्य प्रतियोगिवृत्तित्वेऽपि अयोगोलकान्यत्वादिप्रकारकप्रमाविषयत्वाद्यभावस्य भावप्रतियोगिकतया अयोगोलकत्वाद्यतिरिक्तस्य प्रतियोग्यवृत्तित्वान्नातिव्याप्तिरित्यवधेयम् ॥

इति द्वितीयस्वलक्षणम् ।

---

[दी] केचित्तु व्याप्यवृत्तेर्हेतुसमानाधिकरणस्य

---

## अथ चक्रवर्तिलक्षणम् ।

चक्रवर्तिलक्षणमाह— केचित्त्विति । सद्धेतौ साध्यवृत्तिघट-त्वादिना साध्याभाव एव लक्षणघटक, तत्प्रतियोगितानवच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वाल्लक्षणसमन्वय; व्यभिचारिणि साध्यतावच्छेदकावच्छिन्नसाध्याभावस्यापि लक्षणघटकत्वान्नातिव्याप्ति । कपिसंयोगी एतत्त्वादित्यादावव्याप्तेर्वारणाय व्याप्यवृत्तेरिति । व्याप्यवृत्तित्वं च निरवच्छिन्नवृत्तिकत्वम्, नत्ववच्छिन्नवृत्तिकान्यत्वम्; कपिसंयोगी सत्त्वादित्यादौ कपिसंयोगाभावादे द्रव्ये अवच्छिन्नवृत्तिकतया तदन्यत्वाभावात् घटत्वादिना साध्याभावस्यैव लक्षणघटकतया अतिव्याप्त्यापत्ते; निरुक्तव्याप्यवृत्तित्वविशिष्टस्य च हेत्वधिकरणवृत्तित्वं बोध्यम्, अन्यथा कपिसंयोगी एतत्त्वादित्यत्र कपिसंयोगत्वावच्छिन्नकपिसंयोगाभावस्य द्रव्ये हेतुसमानाधिकरणतया गुणादौ च निरवच्छिन्नवृत्तिकतया तमादायाव्याप्तेर्वारणासम्भवात् । हेत्वधिकरणनिरूपितनिरवच्छिन्नाधेयतावत्त्वं हेत्वधिकरणनिष्ठनिरवच्छिन्नाधिकरणताकत्वं वा दलद्वयपर्यवसितार्थं ।

केचित्तु- "व्याप्यवृत्ते हेतुसमानाधिकरणसाध्याभावस्ये"ति समुदायस्य हेत्वधिकरणे व्याप्यवृत्तिर्य साध्याभावस्तस्येत्यर्थ, हेत्वधिकरणे व्याप्यवृत्तित्वं च हेत्वधिकरणीभूतयत्किञ्चिद्व्यक्तिनिष्ठात्यन्ताभावप्रतियोगिताया सामानाधिकरण्येन अनवच्छेदक यदभावनिष्ठ तद्व्यक्तित्वं तत्त्वम् । नच विशिष्टसत्तावान् जातेरित्यादौ गुणादिनिष्ठसत्त्वादिरूपाभावप्रतियोगिताया विशिष्टसत्ताभावनिष्ठतद्व्यक्तित्वान्यावच्छेदकत्वात् विशिष्टसत्त्वाद्यभावस्य व्याप्यवृत्तित्वानुपपत्ति, यदभावाभावत्वावच्छिन्नानधिकरणत्व हेतु-

मतः तत्त्वमिति विवक्षणे व्यधिकरणधर्मावच्छिन्नाभावस्य असङ्ग्रह प्रसङ्गः, तदभावाप्रसिद्धेरिति वाच्यम्, यत्किञ्चिद्धेत्वधिकरणवृत्तिताव-च्छेदकानुयोगितानिरूपकतानवच्छेदकं यदभावत्वं तत्त्वस्य विवक्षितत्वात्. गुणे गुणान्यत्वविशिष्टसत्ताभावो नास्तीत्यप्रत्ययेन विशिष्टसत्ताभावत्वा वच्छिन्ननिरूपितानुयोगिताविशिष्टाया सत्ताया गुणादिवृत्तितानभ्युप गमेन विशिष्टसत्ताभावस्य व्याप्यवृत्तितानिर्वाहादित्याहुः ।

ननु संयोगिभिन्नं प्रमेयत्वादित्यत्रातिव्याप्ति. संयोगिभेदाभावस्य तद्भेदप्रतियोगितावच्छेदकीभूतसंयोगात्मकस्य अव्याप्यवृत्तित्वेन लक्षण घटकत्वाभावात्, व्यधिकरणधर्मावच्छिन्नाभावमादाय लक्षणगमनादिति चेन्न, संयोगिभेदस्य व्याप्यवृत्तित्वेन तस्य द्रव्यत्वसंयोगप्रकारकप्रमाविशेष्य त्वाद्यवच्छिन्नभेदसमनियततया तदभिन्नत्वेन तद्भेदप्रतियोगितावच्छेदक द्रव्यत्वादिकमपि संयोगिभेदाभावः; तत्र हेत्वधिकरणे व्याप्यवृत्तितया तत्प्रतियोगितावच्छेदकत्वस्य साध्यतावच्छेदके सत्त्वेनातिव्याप्त्यनवका-शात्; एवं द्रव्यान्यत्वविशिष्टसत्ताभाववान् द्रव्यत्वादित्यादौ व्याप्यवृत्तेः सत्ताविरूपाभावस्य प्रतियोगितावच्छेदकं साध्यतावच्छेदकमित्यव्याप्ति रित्यपि नाशङ्कनीयम्, सत्तादिसत्त्वेपि द्रव्यादौ द्रव्यान्यत्वविशिष्ट सत्ताभावो नास्तीत्यादिप्रत्ययानुदयात् विशिष्टनिरूपिताधिकरणताविशेष स्यैव विशिष्टाभावाभावत्वोपगमात् विशिष्टाभावस्य विशिष्टाधिकरणत्वा भावसमनियततया तदभिन्नतया विशिष्टसत्ताधिकरणताया अपि विशि-ष्टाभावप्रतियोगित्वात् ।

परे तु— संयोगत्वेन संयोगनिरूपिताया अधिकरणतायाः किञ्चि-द्वच्छिन्नत्वेपि संयोगिभेदाभावत्वेन तन्निरूपिताधिकरणता निरवच्छि न्नैव, द्रव्ये संयोगिभेदस्याप्रत्ययात् 'अवच्छेदकमनन्तर्भाव्यैव तदभाव-

त्वावच्छिन्नत्वाप्रतीतेः; एवं द्रव्यादौ सत्तात्वावच्छिन्नसत्ताद्यधिकरणता-सत्त्वेपि द्रव्यान्यत्वविशिष्टसत्तात्वादिनैव तदवच्छिन्नप्रतियोगिताकाभावाभावत्वेनापि न वृत्तिः, तत्र विशिष्टाभावो नास्तीत्यप्रत्ययात्, तथाच साध्यनिष्ठयादृशप्रतियोगिताकाभावत्वावच्छिन्ननिरूपिताऽनवच्छिन्नाधिकरणता हेत्वधिकरणवृत्तिस्तादृशप्रतियोगितानवच्छेदकत्वमेव साध्यतावच्छेदके निवेश्यमिति न कश्चिद्दोष इत्याहुः ।

अथात्र हेत्वधिकरणवृत्तित्वं यदि येन केनचित्सम्बन्धेन, तदा कालिकादिसम्बन्धेन धूमाधिकरणवृत्तिवह्नित्वावच्छिन्नवह्न्यभावादिकमादायाव्याप्तिः; यदि च कालिकसम्बन्धेन काले वह्न्यभावादेः वृत्तिर्वह्न्यनधिकरणदेशावच्छिन्नैवेति नासौ हेत्वधिकरणे निरवच्छिन्नवृत्तिक इति मन्यते, तदापि सत्तावान् जातेरित्यादौ हेतुमति ज्ञानादौ विषयिता सम्बन्धेन वर्तमानं साध्याभावमादायाव्याप्तिर्दुर्वारैव, दैशिकविशेषणता सम्बन्धेन हेत्वधिकरणवृत्तित्वनिवेशने च घटत्वाभावादिसाध्यके व्यभिचारिण्यतिव्याप्तिः, तत्र समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य भावरूपसाध्याभावस्य तेन सम्बन्धेनावृत्तेः, व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकत्वात्; एवं कालिकसम्बन्धावच्छिन्नप्रतियोगिताके आकाशाभावाभावे साध्ये आत्मत्वादिहेतावव्याप्तिः, दैशिकविशेषणतया हेतुसमानाधिकरणस्याकाशाभावस्य प्रतियोगितावच्छेदकतायाः साध्यतावच्छेदके सत्त्वात्, कालिकसम्बन्धेनाकाशाभावरूपप्रतियोगिसत्ताया एव कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभावो नास्तीति प्रत्ययानियामकत्वादाकाशाभावस्यैव तादृशसाध्याभावरूपत्वे बाधकाविरहादिति चेन्न, स्वीययादृशप्रतियोगिताश्रयवत्ताज्ञानं प्रति यादृशसम्बन्धेन स्वप्रकारकज्ञानं विरोधि, तादृशसम्बन्धेन हेत्वधिकरणवृत्तिर्योऽभावः तदीयतादृशप्रतियोगितानवच्छेदकत्वस्यैव निवेशनीयत्वात् । आकाशाभावस्य दैशिकविशेषणतासम्बन्धश्च न दर्शिताकाशाभावाभाववत्ताज्ञानविरोधिज्ञानविषयः,

अपि तु कालिकसम्बन्ध एव, स च तेन सम्बन्धेन आत्मनि न वर्तते, अत आकाशाभावीय साध्यनिष्ठप्रतियोगिताया "यादृशप्रतियोगिते" त्यनेन उपादानासम्भव, अपि तु व्यधिकरणधर्मावच्छिन्नसाध्याभावीयप्रतियोगितायां एव, तादृशाभावज्ञानस्य दैशिकविशेषणतासंसर्गकस्य व्यधिकरण धर्मप्रकारेण साध्यावगाहिन भ्रम प्रति विरोधित्वात्, सामान्यत प्रति योगिप्रकारकज्ञाननिवेशे आकाशप्रकारकज्ञान प्रति दैशिकविशेषणतासम्बन्धेन आकाशाभावप्रकारकज्ञानस्य प्रतिबन्धकतया उक्तदोषतादवस्थ्य मिति ' यादृशप्रतियोगिताश्रये " त्युक्तम्, प्रतियोगिताश्रयवत्ताज्ञान न तत्प्रतियोगितावच्छेदकधर्मावच्छिन्नप्रकारक ग्राह्यम्, तेन आकाशत्वेन तादृशसाध्यवत्ताज्ञान प्रति दैशिकविशेषणतासम्बन्धेन आकाशाभावप्रकारक ज्ञानस्य विरोधित्वेपि न क्षति । एवञ्च प्रतियोगिताश्रयावगाहित्व निवेशे प्रयोजनाभावात् यादृशप्रतियोगितावच्छेदकावच्छिन्नप्रकारताशालि ज्ञान प्रति प्रतिबन्धकमित्येव वक्तव्यम्, साध्यवत्ताज्ञानविरोधित्व वा एतल्लक्षणे निवेशनीयम्, नच आकाशत्वादिना साध्यवत्ताज्ञानविरोधि तामादाय दर्शितदोषतादवस्थ्यात् साध्यतावच्छेदकावच्छिन्नप्रकारकज्ञान विरोधित्वपर्यन्तनिवेशे व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकसाध्याभा ववत्ताज्ञानस्यापि व्यधिकरणधर्मादिप्रकारकसाध्यवत्ताज्ञान प्रत्येव वि रो धि त्वे न साध्यतावच्छेदकावच्छिन्नप्रकारकज्ञाना वि रो धि त या तादृशसाध्याभावाप्रसिद्धिरिति वाच्यम् . घटत्वादिविशिष्टवह्निमा नित्यादिज्ञानस्यापि साध्यतावच्छेदकावच्छिन्नप्रकारकतया "अधिकन्तु" इत्यादिन्यायेन अक्षतत्वात् । नच तन्मात्रावच्छिन्नप्रकारकताकत्वमवश्य निवेश्यम्, अन्यथा आकाशत्वनिरुक्तसाध्यतावच्छेदकोभयरूपेण साध्य ज्ञान प्रति दैशिकविशेषणतया आकाशाभाववत्ताज्ञानस्य विरोधितया तद्दोषतादवस्थ्यमिति कथ व्यधिकरणधर्मावच्छिन्नाभावसग्रह इति वाच्यम्, प्रतियोगितावच्छेदकमात्रावच्छिन्नप्रकारतानिवेशेपि व्यधिकरणधर्मावच्छिन्ना भावसङ्ग्रहात्, तदवच्छिन्नप्रकारतामात्रनिवेशे उक्तस्थले आकाश

[दी] साध्याभावस्य प्रतियोगितायामनवच्छेदकं

भावीय दैशिकविशेषणतावारणासम्भवात् . द्वितीयलक्षणे यादृशप्रतियोगितावच्छेदकयादृशप्रतियोगितासम्बन्धावच्छिन्न प्रकारतावच्छेदकातिरिक्तानवच्छिन्नप्रकारताशालिज्ञानं प्रति येन सम्बन्धेन स्वप्रकारकज्ञानं विरोधीति विवक्षणवत् एतल्लक्षणे साध्यतावच्छेदकरूपकृतप्रतियोगितावच्छेदकातिरिक्तानवच्छिन्नप्रकारताकज्ञानविरोधितानिवेशेन प्रतीकारसम्भवात्, आकाशत्वादेः आकाशाभावाभावत्वादिरूपप्रतियोगितावच्छेदकातिरिक्ततया तदवच्छिन्नप्रकारताकज्ञानविरोधितामादाय दोषाभावात् । हेतुसमानाधिकरणस्य व्याप्यवृत्तेर्वह्नित्वादिना घटाद्यभावस्य प्रतियोगितावच्छेदकमेव वह्नित्वादिरूपं साध्यतावच्छेदकम्, अतः साध्याभावस्येति ।

यद्यपि वह्नित्वेन घटाभावादेः घटत्वेन वह्न्यभावाद्यभिन्नतया तादृशाभावोऽपि साध्याभाव एव, तथापि प्रतियोगितावच्छेदकभेदेन अभावभेदमतेनेदं लक्षणम्, समनियताभावानामैक्याभिप्रायेण चाऽग्रिमलक्षणम् । अथवा हेतुसमानाधिकरणाभावीयसाध्यनिष्ठप्रतियोगितानवच्छेदकत्वनिवेशान्न दोषः, वह्नित्वादिना घटाद्यभावस्य घटत्वादिना वह्न्यभावाभिन्नत्वेऽपि तदीयघटादिनिष्ठप्रतियोगिताया एव व्यधिकरणवह्नित्वावच्छिन्नत्वेन वह्न्यादिनिष्ठप्रतियोगिताया वह्नित्वादेरनवच्छेदकत्वात् । प्रतियोगिता साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेन निवेशनीया, तेन सम्बन्धान्तरावच्छिन्नप्रतियोगिताकसाध्याभावमादाय नासम्भवः व्यधिकरणधर्मावच्छिन्नप्रतियोगिताया अपि सम्बन्धावच्छिन्नत्वं व्यवस्थापितमेव । प्रतियोगितावच्छेदकत्वं च साध्यतावच्छेदकताघटकसम्बन्धावच्छिन्नं ग्राह्यम्, तेन गुणवान् द्रव्यत्वादित्यादौ हेतुसमानाधिकरणस्य विषयितया गुणत्वादिमतः समवायेनाभावस्य या ज्ञानादिनिष्ठप्रतियोगिता तदवच्छेदकत्वेऽपि साध्यतावच्छेदकस्य न क्षतिः; सर्वत्र द्वित्वावच्छिन्नप्रतियोगिताकसाध्याभावमादायैवैतल्लक्षणस्यान्वयासम्भवात् ।

[दी] हेतुसमानाधिकरणस्य व्याप्यवृत्ते प्रतियोगिव्यधिकरणस्य वा

---

व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगमेऽपि क्षतिविरहेण व्यधिकरणधर्मावच्छिन्नाभावखण्डनं मूलकृता ऽकिञ्चित्करम्, अतो लक्षणान्तरमाह— **हेतुसमानाधिकरणस्ये** ति । अत्र च व्यधिकरणधर्मावच्छिन्नाभावस्याऽप्रामाणिकत्वे व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितावच्छेदकत्वमादाय व्याप्तेर्वारणायोपात्तस्य सामानाधिकरण्येने त्यस्य वैयर्थ्याल्लक्षणासामञ्जस्यमिति तादृशाभावखण्डनं सङ्गच्छते । अत्रापि हेतुसमानाधिकरणस्य व्याप्यवृत्ते रित्यस्य पूर्वोक्त एव पर्यवसितार्थः व्यावृत्त्यादिकमपि पूर्वोक्तमेव । कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाकाशगगनाभाववान् आत्मत्वादित्यादौ अव्याप्तिवारणाय पूर्वोक्तरीत्यनुसरणे गौरवात् व्याप्यवृत्तित्वं परित्यज्य प्रतियोगिव्यधिकरणत्वेनाभावं विशेषयति — **प्रतियोगिव्यधिकरणस्ये** ति । पूर्वोक्तलक्षणे साध्याभावस्य विशिष्योपादानात् तस्य च हेत्वधिकरणे साध्यस्वप्रतियोगिसामानाधिकरण्यमसम्भवमेव एकव्यक्तिसाध्यके, अत स्तत्र प्रतियोगिव्यधिकरणसाध्याभावाप्रसिद्ध्या अव्याप्तिरिति तदाशयः, प्रतियोगिव्यधिकरणत्वञ्च न प्रतियोग्यधिकरणावृत्तित्वम्, संयोगी सत्त्वादित्यादौ संयोगाभावस्यातथात्वात् तादृशाभावान्तरमादायातिव्याप्तेः, किन्तु प्रतियोग्यनधिकरणवृत्तित्वम्, एवञ्च प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्तेरिति दलद्वयपर्यवसितार्थः । प्रतियोग्यनधिकरणत्वं च साध्यतावच्छेदकसम्बन्धेन प्रतियोग्यधिकरणभिन्नत्वम्, अतः समवायेन ज्ञानादिसाध्यकद्रव्यत्वादिहेतौ नातिव्याप्तिः, इत्थञ्च प्रतियोगिता न सम्बन्धविशेषावच्छिन्नत्वेन विशेषणीया, विशेषणताविशेषेणाभावसाध्यके सर्वस्यैवाभावस्य तेन सम्बन्धेन किञ्चिद्विशिष्टत्वाभावरूपप्रतियोगिसमानाधिकरणतया प्रतियोगि

[दी] अभावस्य प्रतियोगितायाः सामानाधिकरण्येना ऽनवच्छेदक वा यत्साध्यतावच्छेदक तदवच्छिन्नसामानाधिकरण्य व्याप्तिः,

---

व्यधिकरणाभावाप्रसिद्धिः, अतो "यादृशप्रतियोगिताश्रयानधिकरणत्व हेतुमत स्तादृशप्रतियोगितायाः सामानाधिकरण्येनानवच्छेदक यत्साध्यतावच्छेदक तदवच्छिन्नसामानाधिकरण्य" मिति सिद्धान्तलक्षणे वक्ष्यमाणरीत्या निष्कर्षणीयम् ।

अथ विशिष्टसत्तावान् जातेरित्यत्राव्याप्तेर्वारणाय यादृशप्रतियोगितावच्छेदकविशिष्टानधिकरणत्व हेतुमत इत्यस्यैव वाच्यतया वह्निमान् धूमादित्यादौ वह्नित्वादिना घटाद्यभावीयप्रतियोगिताया लक्षणघटकतासम्भव, तदवच्छेदकवह्नित्वावच्छिन्नानधिकरणत्वस्य हेतुमत्यसत्त्वात् तथाच सामानाधिकरण्येने त्यनर्थकम् । अत्र केचित्, यादृशप्रतियोगितावच्छेदकविशिष्टयादृशप्रतियोगिताश्रयोभयानधिकरणत्व हेतुमत इत्येव तत्तार्थकयार्थं विवक्षणीयम्, दर्शिताभावीयप्रतियोगितावच्छेदकवह्नित्वादिविशिष्टस्य हेतुमति सत्त्वेपि तादृशप्रतियोगिताश्रयघटादेरसत्त्वात् उभयानधिकरणत्व हेतुमतोऽक्षतमेवेति तादृशप्रतियोगितावच्छेदकसमादाय दोषवारकतया सामानाधिकरण्येने त्यस्य सार्थकता, न च वह्नित्वेन घटाद्यभावप्रतियोगिता यावद्वह्निभिन्नवृत्तिरेकैव स्वीक्रियते, न तु घटादिरूपप्रतियोगिभेदेन, भिन्ना अभावस्य प्रतियोगितावच्छेदकस्य चैक्यात्, तथाच घटादिनिष्ठप्रतियोगिताश्रयसाधनादेरेव साधनवति सत्त्वात् तादृशप्रतियोगिताश्रयानधिकरणत्व न तत्रेति न सामानाधिकरण्येने त्यस्य सार्थकतासम्भव, प्रतियोगिभेदेन प्रतियोगिताभेदे [illegible] महानसीयवह्न्यादिनिष्ठाया वह्न्यादिसामान्याभावीयप्रतियोगिताया पर्वतीयवह्न्यवृत्तितया तादृशप्रतियोगिताश्रयानधिकरणत्वस्य हेतुमति

पर्वतादौ सत्त्वात् वह्नित्वादेः तदवच्छेदकत्वमादायाव्याप्तिरिति वाच्यम्; यतः प्रतियोगिभेदेन न प्रतियोगिताभेदः, अपितु अवच्छेदकभेदेनैव; एवमपि वह्निभिन्नवान् घटादित्यादौ वह्निभिन्नत्वेन वह्न्यभावीयप्रतियोगिताया वह्निभिन्ने असम्भावितत्वया तदाश्रयानधिकरणत्वस्य वह्निशून्ये हेतुमत्यक्षततया तादृशप्रतियोगितावच्छेदकत्वमादायाव्याप्तिवारकतया सामानाधिकरण्येनेत्यस्य सार्थक्यम्; महाकाले घटवान् कालपरिमाणादित्यादौ महाकालान्यत्वविशिष्टघटाद्यभावीयप्रतियोगितैव तादृशी, महाकालस्य तदवच्छेदकमहाकालान्यत्वविशिष्टघटत्वावच्छिन्नाधिकरणताशून्यत्वात् अथ वा वक्ष्यमाणरीत्या साध्यतावच्छेदकसम्बन्धसामान्ये यादृशप्रतियोगितावच्छेदकविशिष्टप्रतियोगिकत्वयादृशप्रतियोगिताश्रयप्रतियोगिकत्वोभयाधिकरणीभूतयत्किंचिद्व्यक्तत्वचतुर्योगिकत्वैतन्निष्ठत्वावच्छिन्नाभाव स्तदनवच्छेदकत्वमेव वाच्यम्, एवञ्च तत्राकृतिगगनाद्यभावप्रतियोगितैव तादृशी, एवञ्च वह्नित्वादिना घटाद्यभावप्रतियोगिता तादृशी, वह्नित्वविशिष्टप्रतियोगिकत्वतदाश्रयवह्निभिन्नप्रतियोगिकत्वयोरेकस्मिन् सम्बन्धे असत्त्वेन तादृशप्रतियोगिताया अपि तथात्वाद्वारकतयापि सामानाधिकरण्येनेत्यस्य सफलत्वमवसेयमित्याहुः ।

परे तु— अत्यन्ताभावस्येव अन्योन्याभावस्यापि प्रतियोग्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वोपगमात् पर्वतादौ वह्नित्वविशिष्टाद्यवच्छिन्न जलादिमद्भेदोऽपि प्रामाणिकः, एवञ्च स्वावच्छेदकविशिष्टावच्छिन्नस्वाश्रयवन्निष्ठप्रतियोगिताकभेदवद्धेत्वधिकरणकं यत्प्रतियोगित्वं तदनवच्छेदकत्वं साध्यतावच्छेदकस्य निवेशनीयम्, एवञ्च वह्नित्वादिना जलाद्यभावीय प्रतियोगितापि तादृशं स्यम्, कथितभेदस्य तदवच्छेदकवह्नित्वादि विशिष्टावच्छिन्नतदाश्रय जलादिमन्निष्ठप्रतियोगिताकत्वात्; अत स्तदवच्छेदकतामादाय दोषवारणाय सामानाधिकरण्येनेति । " संयोगी द्रव्य-

त्वात्" "वह्निमान् धूमात्" इत्यादौ संयोगित्ववह्नित्वाद्यवच्छिन्न संयोगवदन्योन्याभावप्रतियोगिताया गुणत्वद्रव्यत्वाद्यवच्छिन्नसंयोगिपर्वतभेदौ संयोगवदन्योन्याद्यवच्छिन्नघटादिभेदौ चादाय तथात्ववारणायावच्छिन्नान्तानि दलान्तयोरुपादानम्, अथ वा यादृशप्रतियोगितावच्छेदकावच्छिन्नयादृश प्रतियोगिताश्रयवृत्तिप्रतियोगितावच्छेदकताकभेदवत्त्वं हेतुमत तदनव च्छेदकत्वं विवक्षणीयम्, वह्नित्वावच्छिन्नघटाभावप्रतियोगिताप्येतादृशी, तादृशप्रतियोगितावच्छेदकवह्नित्वाद्यवच्छिन्नतादृशप्रतियोगितासमानाधिकर-णप्रतियोगितावच्छेदकताकस्य वह्नित्वेन घटवानेति प्रतीतिविषयभेदस्य हेतुमति सत्त्वात् व्यधिकरणधर्मस्यात्यन्ताभावप्रतियोगितावच्छेदकत्ववद न्योन्याभावप्रतियोगितावच्छेदकतायामप्यवच्छेदकत्वात्, अत एव "सम वायितया वाच्यत्वच्छेदोऽपि द्रष्टव्य" इति मिश्रैरभिहितम्, इत्थञ्च तादृशप्रतियोगितावारणाय सामानाधिकरण्येनेति। हेतुमतो वह्नि त्वेन घटवद्भेदवत्त्वं घटत्वेन वह्निमद्भेदवत्त्वञ्चादाय वह्नित्वाद्यवच्छिन्न वह्निनिष्ठप्रतियोगिताया तादृशत्ववारणाय प्रकृतप्रतियोगितासमानाधि करणतादृशावच्छेदकावच्छिन्नत्वघटितभेदप्रतियोगितावच्छेदकताया निवेशनम्, महाकालो घटवान् कालपरिमाणादित्यादौ महाकालान्यत्वविशिष्टघटा द्यभावीयप्रतियोगितामादायैव लक्षणसमन्वयः, न तु गगनत्वघटत्वादिना घटाद्यभावीयप्रतियोगिताम्, गगनत्वघटत्वाद्यवच्छिन्नघटवृत्तिप्रतियोगिता वच्छेदकताकभेदस्य हेत्वधिकरणमहाकाले सम्भवेऽपि सामानाधिकरण्येन तदवच्छेदकस्याप्रसिद्धेः, अथ वा तादृशप्रतियोगितासामान्ये यद्धर्मसामा नाधिकरण्यविशिष्टयद्धर्मावच्छेद्यत्वाभावः, तद्धर्मविशिष्टसामानाधिकरण्यव्या प्तिरित्येव विवक्षणीयम्, इत्थञ्च व्यधिकरणधर्मावच्छिन्नप्रतियोगितामादायापि लक्षणसमन्वयस्तत्र सम्भवतीत्यवधेयम्। वह्नित्वेन वह्निधूमोभय नास्तीति तादृशप्रतीतिविषयाभावस्य "वह्निमान् वह्नित्वेन वह्निधूमोभयवान्" इ[ति]

प्रतीतिसिद्धभेदमादाय प्रतियोगिव्यधिकरणत्वेऽपि तस्य प्रतियोगितावच्छेद
कत्वं न वह्नित्वमात्रे पर्याप्तम्, तथा सति वह्नित्वरूपप्रतियोगितावच्छे-
दकविशिष्टवह्निरूपप्रतियोगिमत्यपि तादृशाभावप्रत्ययप्रसङ्गात्; किन्तु वह्नित्व
तदुभयत्वयोरेव तत्पर्याप्तिः, अतस्तादृशप्रतियोगितायां समानाधिकरण
तया अवच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः; यदि च तादृशाभाव
प्रतियोगितावच्छेदकं वह्नित्वादिकमेव, न तु प्रतियोगिविशेषणतापन्न-
मुभयत्वम्, प्रतियोगिविशेषणतानापन्ने प्रतियोगितावच्छेदकत्वावगाहिप्रतीत्या
तद्विशेषणतापन्ने तदनवगाहनात्, अन्यथा वह्नित्वेन घटो नास्तीत्या
द्यापि घटत्ववह्नित्वाद्युभयावच्छेदकत्वपर्याप्त्यवगाहनौचित्यात् सामा
नाधिकरण्येने त्यस्य वैयर्थ्यापत्ते, वह्नित्वेनोभयाभावप्रतियोगिता च
व्यासज्यवृत्तिः, अतो न तादृशाभावस्य केवलान्वयित्वानुपपत्तिरिति
मन्यते!, तदा सामानाधिकरण्येने त्यस्य प्रतियोगितापर्याप्त्यधिकरण
वृत्तित्वेनेत्यर्थ इत्याहुः ।

तदुभयमपि न युक्तम्, एवं सति घटत्वादिना साध्याभाव
प्रतियोगिताया अपि निरुक्तप्रतियोगिवैयधिकरण्यनिरूपकत्वसम्भवेन प्रथम
लक्षणे प्रतियोगिवैयधिकरण्यानभिधानस्य निर्बीजतया सन्दर्भविरोधापत्तेः

वस्तुतो यादृशप्रतियोगितासम्बन्धावच्छिन्नप्रकारतावच्छेदकयत्कि
ञ्चिद्धर्मावच्छिन्नानधिकरणत्वं हेतुमतः तदनवच्छेदकत्वं साध्यतावच्छे
दकस्य विवक्षणीयम्, कपिसंयोगत्वाद्यवच्छिन्नकपिसंयोगादिनिष्ठप्रति-
योगितासंसर्गावच्छिन्नप्रकारतावच्छेदकं कपिसंयोगत्वादिकमेव, तदव
च्छिन्नानधिकरणत्वं च न हेतुमत इति न कपिसंयोगी एतद्वृक्षत्वा
दित्यादावव्याप्तिः; घटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनैव प्रमेयत्वा
दिना प्रतियोगिनो घटत्वेन प्रमेयं नास्तीत्यादिज्ञाने भानात् प्रमेयत्वा
द्यवच्छिन्नानधिकरणत्वस्य हेतुमत्यसम्भवात् घटत्वाद्यवच्छिन्नप्रतियोगि-

ताया यादृशप्रतियोगितेत्यनेनोपादानासम्भवात् तथाविधप्रतियोगिताया अप्रसिद्धेः, अतो यत्किञ्चिदिति युक्तम् । दण्डिमान् दण्डिसंयोगादित्यादौ तत्तद्दण्डावच्छिन्नानधिकरणत्वमादाय दण्डिसामान्याभावस्य प्रतियोगिवैयधिकरण्येऽपि न क्षतिः, तत्तद्दण्डावच्छिन्नात्यन्ताभावप्रतियोगितावच्छेदकत्वमादाय दोषवारणाय तत्र परम्परासम्बन्धेन दण्डत्वादेः साध्यतावच्छेदकत्वस्वीकारस्यावश्यकत्वात्, तत्संयोगत्वतद्वह्नित्वादिविशिष्टप्रतियोगिविषयकाभावभाने संयोगत्ववह्नित्वादिरूपसामान्यधर्मावच्छिन्नप्रतियोगिताया संसर्गतया भाने मानाभावात् तत्संयोगत्वतद्वह्नित्वाद्यवच्छिन्नाधिकरणत्वेऽपि हेतुमतो न क्षतिः, संयोगत्ववह्नित्वावच्छिन्नप्रतियोगिताया घटत्वावच्छिन्नत्वेन घटो नास्तीत्यभावबुद्धौ संसर्गतया भानोपगमे अभावनिरूपितत्वेन प्रकारता निवेशनीया, विशिष्टसत्तावान् जातेरित्यादौ विशिष्टसत्तात्वाद्यनवच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नप्रकारतावच्छेदकविशिष्टसत्तात्वाद्यवच्छिन्नानधिकरणत्वस्य हेतुमति सत्त्वादव्याप्तिः, वह्नित्वाद्यवच्छिन्नघटादिनिष्ठान्याधिकरणधर्मावच्छिन्नाभावीयप्रतियोगितासम्बन्धावच्छिन्नप्रकारतावच्छेदकघटत्वाद्यवच्छिन्नानधिकरणत्वस्य हेतुमति सत्त्वात् सामानाधिकरण्येनेत्यस्य सार्थकता, एकमात्रवृत्तिसाध्यकस्थले साध्यनिष्ठप्रतियोगितासंसर्गावच्छिन्नप्रकारतावच्छेदकावच्छिन्नानधिकरणत्वं न हेतुमत इति साध्यवृत्तितथाविधप्रतियोगिताया अप्रसिद्ध्या न पूर्वोक्तलक्षणे प्रतियोगिव्यधिकरणत्वं निवेशितम्, वह्नित्वादिना उभयाभावमादाय दोषस्तु पूर्ववदेव वारणीय इति ।

अन्ये तु— यदि " घटत्वेन वह्निर्नास्ति " " वह्नित्वेन घटो नास्ति " त्यादौ वह्नित्वघटत्वादिरूपसमानाधिकरणधर्मस्यापि प्रतियोगितावच्छेदकत्वं भासते, अन्यथा तादृशप्रतीते प्रतियोगिनिष्ठतत्तद्धर्मोपलक्षणतया भाने तद्विशिष्टवैशिष्ट्यानवगाहितया धर्मिविशेष्यकत्वस्याप्युपपत्त्यापत्ते , नच वह्निरघटत्वादे

प्रतियोगितावच्छेदकत्वानवगाहने तन्निर्विकल्पकानन्तरं तादृशाभावबुद्धिरिष्टैव, प्रतियोगितावच्छेदकतया यदवगाहते तन्निर्विकल्पकानन्तरं तदभावप्रतीत्यनुपगमादिति वाच्यम्, वह्नित्वादिनिर्विकल्पकानन्तरं तथाविधप्रत्ययोपगमे विशेषाभावेन तदुत्तरं वह्नित्वाद्यंशे प्रतियोगितावच्छेदकत्वानवगाहि वह्निर्नास्तीत्याकारकसमानाधिकरणधर्मावच्छिन्नाभावप्रत्ययस्यापि स्वीकारापत्तेः इत्युच्यते, तदा व्याप्यवृत्तितानिवेशपक्षे वह्नित्वादेः व्याप्यवृत्तिघटत्वाद्यवच्छिन्नवह्न्याद्यभावप्रतियोगितावच्छेदकत्वमादायासम्भवप्रसक्तिरित्यालोच्य प्रतियोगिवैयधिकरण्यनिवेशनमनुससार ;

तदर्थः प्रतियोगितावच्छेदकादिविशिष्टानधिकरणवृत्तित्वमेव, तथा सत्यपि हेतुमतो घटत्वादिविशिष्टानधिकरणतया वह्नित्वादिना घटाद्यभावमादाय दोषप्रसक्त्या सामानाधिकरण्येने त्यस्य सार्थक्यसम्भवात् । नच प्रतियोगितावच्छेदकविशिष्टानधिकरणत्वं प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगितावच्छेदकताकभेदवत्त्वम्, तथाच संयोगत्वाद्यवच्छिन्नघटादिमद्भेदमादाय संयोगात्यन्ताभावस्य प्रतियोगिवैयधिकरण्यापत्तिः, भेदप्रतियोगितावच्छेदकतायां प्रकृतप्रतियोगिसामानाधिकरण्यनिवेशने च "परे" इत्यादिना अभिहितद्वितीयकल्प एव पर्यवसानमिति घटत्वादिना वह्न्याद्यभावस्यापि प्रतियोगिवैयधिकरण्यापत्त्या वह्नित्वादेः तत्प्रतियोगितायाः सामानाधिकरण्येनावच्छेदकतया ऽव्याप्तेरिति वाच्यम्, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकभेदानभ्युपगमेनैवोक्तापत्त्यसम्भवात् । घटत्वेन पटवानित्यादौ घटत्वाद्यवच्छिन्नपटात्यन्ताभावस्यैव विषयत्वोपगमात्, प्रतियोगितावच्छेदकं सामानाधिकरण्येन यत्रावच्छेदकं तादृशप्रतियोगितावच्छेदकताक एव वा भेदो निवेश्यः, यथैवमपि घटत्वाद्यवच्छिन्नवह्न्याद्यभावस्य घटत्वाद्यवच्छिन्नघटादिव्यधिकरणस्य प्रतियोगितावच्छेदकत्वमादायाव्याप्तिर्दुर्वारैवेति चेन्न; सामानाधिकरण्येन प्रतियोगिताया यदवच्छेदकं यत् तदवच्छिन्नतत्समानाधिकरणप्रतियोगितावच्छेदकताकभेदस्यैव

[दी] साध्यतावच्छेदकावच्छिन्नसाध्याभाववदवृत्तित्वस्यैव साध्यतावच्छेदकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्यापि व्यभिचारत्वात् । अवच्छेदकत्वञ्चेह तत्पर्याप्त्यधिकरणत्वम्,

---

तदाश्रयसामानाधिकरण्यमिति तल्लाभ इति वाच्यम्, वह्निर्त्वं धूमाव्यभिचारीति प्रयोगाभावात् उक्तधर्मबोधकाव्यभिचारपदसमभिव्याहृतमत्वर्थीयस्याश्रयत्वाबोधकत्वात् अव्यभिचारिपदार्थान्वयितावच्छेदक यद्रूप तदवच्छिन्नसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वबोधकताया व्युत्पत्तिसिद्धत्वात्, साध्यतावच्छेदकस्याव्यभिचारिपदार्थत्वे "हेतुसमानाधिकरणे" त्यादिव्याप्तिबोधस्याशक्यत्वाच्चेति चेन्न, "अव्यभिचारिसम्बन्ध" इत्यस्याव्यभिचारिहेतुनिष्ठसाध्यसामानाधिकरण्यमित्यर्थ, एवञ्च साध्यतावच्छेदकानिष्ठस्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकतानिरूपकहेतुनिष्ठसाध्यसामानाधिकरण्यमिति पर्यवसितम्, उक्तलक्षणस्याप्यत्रैवार्थे तात्पर्यम्, न तु यथाश्रुतविशेष्यविशेषणभावे, तदापन्नस्य अव्यभिचारिसम्बन्धपदेन बोधयितुमशक्यतया पारिभाषिकताया दुर्वारत्वात्; नच यद्रूपावच्छिन्नस्य यस्य व्याप्तित्वं तदन्यरूपेण तस्याव्यभिचारिसम्बन्धपदार्थत्वेऽपि न क्षतिरिति वाच्यम्. एव सति साध्याभाववदवृत्तित्वमात्रस्य व्यभिचारपदार्थत्वेऽपि व्यतिरेकिसाध्यकोक्तव्याप्तेरव्यभिचारिसम्बन्धरूपतोपपत्तेरुक्तधर्मस्य व्यभिचारपदार्थत्वव्यवस्थापनाया अनुपयुक्तत्वात्; उक्तलक्षणेऽपि साध्यसामानाधिकरण्यमन्तर्भाव्याव्यभिचारिसम्बन्धरूपताया व्यवस्थापयितुं शक्यत्वात्; साध्यसामानाधिकरण्यानन्तर्भावेऽपि प्रतियोगिसमानाधिकरणस्वसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वरूपपर्यवसितपूर्वलक्षणस्याव्यभिचारिसम्बन्धरूपतासम्भवात् । अवच्छेदकत्व मिति । अवच्छेदकमित्यत्र यदवच्छेदकपदं तत्तात्पर्यविषयावच्छेदकत्वमित्यर्थः । तत्पर्याप्त्यधिकरणत्वम् — पर्याप्तिसम्बन्धेनावच्छेदकतावत्त्वम्, तथाच

[दी] तेन विशिष्टवह्न्यभावस्य ह्रदत्ववह्नित्वोभयावच्छिन्नाभावस्य च प्रतियोगितावच्छेदकत्वेऽपि वह्नित्वस्य न क्षतिः ।

---

पर्याप्तिसम्बन्धेन अवच्छेदकत्वावच्छिन्नस्य भेदो नवच्छेदकपदेन विवक्षित इति भावः । विशिष्टवह्न्यभावस्य प्रतियोगितावच्छेदकत्वेऽपि वह्नित्वस्येत्यन्वयः । महानसीयत्वादिविशिष्टवह्न्यभावप्रतियोगिताया महानसीयत्वसहितस्य वह्नित्वस्यावच्छेदकत्वेऽपि आश्रयत्वसम्बन्धेनावच्छेदकतावदन्यत्वस्य वह्नित्वे दुर्लभत्वादिति भावः । प्रतियोगिविशेषणतापन्नधर्मान्तरसहितवह्नित्वावच्छिन्नाभावमादाय दोषं दर्शयित्वा प्रतियोगिविशेषणतापन्नधर्मस्यैव प्रतियोगितावच्छेदकत्वं प्रतीयत इति नियमानभ्युपगन्तुर्व्यधिकरणधर्मावच्छिन्नाभाववादिनः प्रतियोग्यवृत्तिधर्मसहित प्रतियोगिवृत्तिधर्मपर्याप्तप्रतियोगितावच्छेदकताकोऽभावोऽस्तीति व्युत्पादनाय तादृशाभावमादायापि दूषणं दर्शयति - ह्रदत्वे ति । उभयावच्छिन्नाभावप्रतियोगितावच्छेदकीभूतघटकप्रत्येकस्यावच्छेदकतायाः अव्याहतत्वादिति भावः । न क्षतिरिति । अवच्छेद्याश्रयविशेषणभावापन्नेषु तदनापन्नेषु च नानाधर्मेषु पर्याप्त यदवच्छेदकत्वं पर्याप्तिसम्बन्धेन तदवच्छिन्नभेदस्य तत्पर्याप्त्यनवच्छेदकप्रत्येकधर्ममात्रवृत्तिधर्मावच्छेदेन सत्त्वाद्वह्नित्वादेस्तादृशप्रतियोगितानवच्छेदकत्वस्य घटत्वावच्छिन्ने घटपटोभयत्वाद्यवच्छिन्नभेदवन्निष्प्रत्यूहत्वादिति भावः । नच यद्विशिष्टह्रदत्ववह्नित्वोभयावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येन यदवच्छेदकत्वं तद्वह्नित्वमात्रे पर्याप्तम्, ह्रदत्वस्य व्यधिकरणतयैव अवच्छेदकत्वादिति कथं वह्नित्वस्य तादृशावच्छेदकत्वावच्छिन्नान्यत्वनिर्वाह इति वाच्यम्, यतः स्वसामानाधिकरण्येन अनवच्छेदकत्वमित्यस्य तत्प्रयोगितासमानाधिकरणवृत्तिमत्प्रतियोगितावच्छेदकत्वं तदवच्छिन्नभेदकूटवत्त्व

[टी] एवञ्च व्याप्तेरव्यभिचारिसम्बन्धरूपतापि सङ्गच्छते । हेतौ

---

निवेशनीयत्वात् । अथ वह्नित्वादिना घटाद्यभावस्य यदि घटत्वा
दिकं प्रतियोगितावच्छेदकम् ? तदा घटादिमति तादृशाभावाप्रसक्त इति
वह्नित्वघटत्वाद्योरेव अवच्छेदकतापर्याप्तिरुपगन्तव्या, तथाचानवच्छेद
कपदस्यावच्छेदकतापर्याप्त्यनधिकरणपरतया व्याप्येयतयैव तादृशाभाव
प्रतियोगितामादाय दोषाप्रसक्तौ सामानाधिकरण्येनेत्यस्य वैयर्थ्य
मशक्यवारणमेवेति चेन्न, प्रतियोगिविशेषणतापन्नतदनापन्नयोरवच्छेदकता
वैलक्षण्येन प्रत्येकमेवावच्छेदकतापर्याप्ते पर्याप्तिविवक्षामात्रेण प्रतीकारा
सम्भवात् सामानाधिकरण्येनेत्यस्य सार्थक्यम् तदपि प्रतियोगि
विशेषणतापन्नस्य यादृश विलक्षणमवच्छेदकत्वं तत्पर्याप्त्यनधिकरणत्व
लाभायैव, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव तत्प्रतियोगिताव
च्छेदकविशिष्टनिराधिकत्वोपगमेनोक्ताभावस्य घटादिमति वृत्ता बाधकाभावात्,
अस्तु वा विलक्षणावच्छेदकत्वेन गत्येक पर्याप्तयारप्यवच्छेदकत्वयो
स्तत्तत्प्रतियोगितावच्छेदकत्वेन अनुगतयो समानाधिकरणधर्मव्यधिकरण
धर्मद्वये पर्याप्त्यन्तरम् तादृशानुगतरूपावच्छिन्नपर्याप्त्यनधिकरणधर्माव
च्छिन्नस्यैवाभावविरोधितेति नानुपपत्ति, एवञ्च हृदत्वव्यधिकरणधर्माव
च्छिन्नवह्न्यभावमादाय पर्याप्तिनिवेशनव्यावृत्तिप्रदर्शनं समानाधिकरण
धर्मस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावप्रतियोगितानवच्छेदकत्व
पक्षीयसाध्यवृत्तित्वघटितलक्षणाभिप्रायेणापि घटन्ते ।

अव्यभिचारिसम्बन्धरूपता— अवयवशक्त्या अव्यभिचारि
सम्बन्धपदार्थनिपाद्यता, तथाच पूर्वलेन तत्पदस्य पारिभाषिकतेति भाव ।
ननु साध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वरूपस्य व्यभिचारपदार्थस्य
तच्छरीरे अनिवेशात्कथमेवमित्यत आह— हेतौ विति । यथा हेतु

न्वयिसाध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वं व्यभिचारः तथा सा-ध्यतावच्छेदकान्वयिनो हेतुसमानाधिकरणाभावप्रतियोगितायाः सामानाधिकरण्येन अवच्छेदकत्वस्यापि तथात्वादित्यर्थः । वह्निर्धूमस्य व्यभिचारीत्यत्राभाववद्वृत्तित्वं व्यभिचारपदार्थ., तदेकदेशेऽभावे षष्ठ्यर्थप्रतियोगितायाः निरूपकत्वसम्बन्धेन अन्वय', प्रतियोगितायामाधेयतासम्बन्धेन धूमस्यावच्छिन्नत्वसम्बन्धेन धूमविशेषणतापन्नधूमत्वस्यान्वय इति धूमत्वावच्छिन्नवृत्त्यभाववद्वृत्तित्वलाभ, साध्यतावच्छेदकावच्छिन्नसाध्यान्तर्भावेन न व्यभिचारपदार्थता, शक्त्यानन्त्यप्रसङ्गात्, साध्यवाचकपदवैयर्थ्यापाताच्च; एवं समानाधिकरणाभावप्रतियोगिताया सामानाधिकरण्येन अवच्छेदकत्वं व्यभिचारपदार्थः, सामानाधिकरण्ये च व्युत्पत्तिवैचित्र्यात् प्रथमान्तपदोपस्थाप्यस्यापि वह्नेर्निरूपकत्वेनान्वय', वह्न्याद्यन्तर्भावेनैव वा शक्तिः, धूमपदं लक्षणया धूमत्वपरम्, आधेयत्वं षष्ठ्यर्थः, अन्वयश्चास्य अवच्छेदकत्वे; निरूपक मितिप्रत्ययार्थ', तथाच धूमत्वनिष्ठस्वसमानाधिकरणाभावप्रतियोगितावच्छेदकतानिरूपको वह्निरित्यन्वयबोधः । यद्यपि लाघवरूपविनिगमकसत्त्वादभाववद्वृत्तित्व एव व्यभिचारपदशक्तिकल्पनमुचितम्, तथापि ज्ञेयत्वं वाच्यत्वस्याव्यभिचारीति प्रामाणिकव्यवहारानुरोधादुपदर्शितगुरुरूपस्यापि व्यभिचारपदार्थत्वमावश्यकम्, तत्र वाच्यत्वाभावाप्रसिद्धया तदभाववद्वृत्तित्वाभावबोधासम्भवात्', उक्तरूपस्य व्यभिचारपदार्थत्वे व्यभिचारस्याभावोऽव्यभिचारमित्यव्ययीभावाश्रयणात् ज्ञेयत्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वमव्यभिचारपदार्थे', इनिप्रत्ययार्थो निरूपकस्, वाच्यत्वपदं वाच्यत्वत्वपरम्, पञ्चम्यर्थश्चाधेयत्वम्, तथाच वाच्यत्वत्वनिष्ठस्वसमानाधिकरणाभावप्रतियोगितानवच्छेदकतानिरूपक ज्ञेयत्वमित्यन्वयबोधः।

अथैवमप्यव्यभिचारिसम्बन्धपदेन उक्तव्याप्तेः कथं लाभः ? नचा व्यभिचारिपदं तादृशप्रतियोगितानवच्छेदकत्वाश्रयपरम्, सम्बन्धश्च

[दी] साध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वस्येव साध्यतावच्छेदकहेतुमन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्यापि व्यभिचारत्वात् । अवच्छेदकत्वञ्चेह तत्पर्याप्त्यधिकरणत्वम्,

---

तदाश्रयसामानाधिकरण्यमिति लाभ इति वाच्यम्, वह्निरिव धूमो व्यभिचारीति प्रयोगाभावात् उक्तधर्मबोधकाव्यभिचारपदसमभिव्याहृत मत्वर्थीयस्याश्रयत्वाबोधकत्वात् अव्यभिचारिपदार्थान्वयितावच्छेदक यद्रूप तदवच्छिन्नसमानाधिकरणाभावप्रतियोगितानवच्छेदकत्वबोधकताया व्युत्पत्तिसिद्धत्वात्, साध्यतावच्छेदकस्याव्यभिचारिपदार्थत्वे "हेतुसमानाधिकरणे" त्यादिव्याप्तिबोधकादाकयत्वाच्चेति चेन्न, "अव्यभिचारिसम्बन्ध" इत्यस्याव्यभिचारिहेतुनिष्ठसाध्यसामानाधिकरण्यमित्यर्थे, एवञ्च साध्यतावच्छेदकनिष्ठम्यसमानाधिकरणाभावप्रतियोगितानवच्छेदकतानिरूपकहेतुनिष्ठसाध्यसामानाधिकरण्यमिति पर्यवसितम्, उक्तलक्षणस्याप्यत्रैवार्थे तात्पर्यम्, न तु यथाश्रुतविशेष्यविशेषणभावे, तद्रूपत्वस्य अव्यभिचारिसम्बन्धपदेन बोधयितुमशक्यतया पारिभाषिकताया दुर्वारत्वात्, नच यद्रूपावच्छिन्नस्य यस्य व्याप्तिः तदन्यरूपेण तस्याव्यभिचारिसम्बन्धपदार्थत्वेपि न क्षतिरिति वाच्यम्, एवं सति साध्याभाववद्वृत्तित्वमात्रस्य व्यभिचारपदार्थत्वेपि व्यतिरेकिसाध्यकोक्तव्याप्तेरव्यभिचारिसम्बन्धरूपत्वोपपत्तेरुक्तधर्मस्य व्यभिचारपदार्थत्वव्यवस्थापनाया अनुपयुक्तत्वात्; उक्तपक्षेपि साध्यसामानाधिकरण्यमन्तर्भाव्याव्यभिचारिसम्बन्धरूपताया व्यवस्थापयितुं शक्यत्वात्, साध्यसामानाधिकरण्यानन्तर्भावेपि प्रतियोगिसमानाधिकरणम्यसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकसाध्यतावच्छेदकवत्त्वरूपपर्यवसितपूर्वलक्षणार्थस्याव्यभिचारिसम्बन्धरूपतासम्भवात् । अवच्छेदकत्वञ्चेति । अवच्छेदकमित्यत्र यदवच्छेदकपदं तत्तात्पर्यविषयावच्छेदकत्वमित्यर्थः । तत्पर्याप्त्यधिकरणत्वम् – पर्याप्तिसम्बन्धेनावच्छेदकतावत्त्वम्, तथाच

[दी] तेन विशिष्टवह्न्यभावस्य ह्रदत्ववह्नित्वोभयावच्छिन्नाभावस्य च प्रतियोगितावच्छेदकत्वेपि वह्नित्वस्य न क्षति ।

---

पर्याप्तिसम्बन्धेन अवच्छेदकत्वावच्छिन्नस्य भेदो नवच्छेदकपदेन विवक्षित इति भावः । विशिष्टवह्न्यभावस्य प्रतियोगितावच्छेदकत्वेपि वह्नित्वस्ये त्यन्वयः । महानसीयत्वादिविशिष्टवह्न्यभावप्रतियोगितायाः महानसीयत्वसहितस्य वह्नित्वस्यावच्छेदकत्वेपि आश्रयत्वसम्बन्धेनावच्छेदकतावदन्यत्वस्य वह्नित्वे दुर्लभत्वादिति भावः । प्रतियोगिविशेषणतापन्नधर्मान्तरसहितवह्नित्वावच्छिन्नाभावमादाय दोषं दर्शयित्वा प्रतियोगिविशेषणतापन्नधर्मस्यैव प्रतियोगितावच्छेदकत्वं प्रतीयत इति नियमानभ्युपगन्तुर्व्यधिकरणधर्मावच्छिन्नाभाववादिनः प्रतियोग्यवृत्तिधर्मसहितप्रतियोगिवृत्तिधर्मपर्याप्तप्रतियोगितावच्छेदकताको ऽभावोऽस्तीति व्युत्पादनाय तादृशाभावमादायापि दूषणं दर्शयति - ह्रदत्वे ति । उभयावच्छिन्नाभावप्रतियोगितावच्छेदकोभयघटकप्रत्येकस्यावच्छेदकताया अव्याहतत्वादिति भावः । न क्षति रिति । अवच्छेद्याश्रयविशेषणभावापन्नेषु तदनापन्नेषु च नानाधर्मेषु पर्याप्तं यदवच्छेदकत्वं पर्याप्तिसम्बन्धेन तदवच्छिन्नभेदस्य तत्पर्याप्त्यनवच्छेदकप्रत्येकधर्ममात्रवृत्तिधर्मावच्छेदेन सत्त्वाद्वह्नित्वादेस्तादृशप्रतियोगितानवच्छेदकत्वस्य घटत्वाद्यवच्छिन्ने घटपटोभयत्वाद्यवच्छिन्नभेदवन्निष्पत्यूहत्वादिति भावः । न च वह्निविशिष्टह्रदत्ववह्नित्वोभयावच्छिन्नप्रतियोगितायाः सामानाधिकरण्येन यदवच्छेदकत्वं तद्वह्नित्वमात्रे पर्याप्तम्, ह्रदत्वस्य व्यधिकरणतयैव अवच्छेदकत्वादिति कथं वह्नित्वस्य तादृशावच्छेदकत्वावच्छिन्नान्यत्वनिर्वाह इति वाच्यम्, यत स्सामानाधिकरण्येन अनवच्छेदक मित्यस्य तत्प्रतियोगितासमानाधिकरणवृत्तिर्यत्प्रतियोगितावच्छेदकत्वं तदवच्छिन्नभेदकूटवत्त्व

[दी] सत्त्ववति च गुणादौ संयोगाद्यभावोपि व्याप्य वृत्तिः. वक्ष्यमाणं वा प्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वमेव तदवच्छेदकत्वमिहापि बोध्यम्;

---

मर्थः, इत्थंच द्रव्यत्ववह्नित्वोभयावच्छिन्नप्रतियोगितायाः समानाधिकरण वृत्त्यप्येकमेवावच्छेदकत्वमुभयपर्याप्तम्, तदवच्छिन्नभेदो वह्नित्वे अव्याहत एवेति ।

ननु संयोगादिसाध्यकसद्धेतावव्याप्तिवारणाय तदभावव्यावर्तक व्याप्यवृत्तित्वादिविशेषणोपादाने सत्साध्यकसत्त्वादिरूपव्यभिचारिहेतावति व्याप्तिप्रसङ्ग, अभावान्तरस्यैव लक्षणघटकत्वादित्याशङ्कां व्यभिचारिहेतुकस्थले संयोगाद्यभावस्य लक्षणघटकत्वप्रदर्शनेन परिहरति— सत्त्ववती ति । "व्याप्यवृत्ति रित्युपलक्षणम्; प्रतियोगिव्यधिकरणश्चेत्यपि बोध्यम् । अयं भाव.;— व्याप्यवृत्तित्वमत्र नावच्छिन्नवृत्तिकान्यत्वम्, न वा स्वसमानाधिकरणाभावप्रतियोगित्वसामान्याभावः, प्रतियोगिव्यधिकरणत्वञ्च न प्रतियोग्यधिकरणावृत्तित्वम्, किन्त्वनवच्छिन्नवृत्तिकत्वम्, स्वाधिकरणयत्किञ्चिद्व्यक्तिनिष्ठाभावाप्रतियोगित्व वा व्याप्यवृत्तित्वम्, प्रतियोग्यनधिकरणवृत्तित्वञ्च प्रतियोगिवैयधिकरण्यं संयोगाद्यभावसाधारणम्, हेत्वधिकरणे तथात्वस्य विवक्षितत्वात; सद्धेतुस्थले न तादृशाभावस्य लक्षणघटकता, तत्र गुणादेर्हेत्वनधिकरणत्वात्; सत्त्वादिहेतुकस्थले तु तस्य हेत्वधिकरणतया तत्र व्याप्यवृत्तिः प्रतियोगिव्यधिकरणश्च साध्याभावो लक्षणघटक एवेति । वक्ष्यमाण मिति । "सिद्धान्तलक्षण" इत्यादि । तदवच्छेदकत्वम्— प्रतियोगितावच्छेदकत्वम् । इहापि— एतल्लक्षणेपि । बोध्यम्— विवक्षणीयम्; अन्यथा लघुरूपसमानियत गुरुधर्मावच्छिन्नसाध्यकव्यभिचारिण्यतिव्याप्तेरिति भाव । तथा च संयो-

गादिरूपसाध्याभावस्य व्याप्यवृत्तित्वादिरूपविशेषणेन व्यावर्तनेऽपि न क्षतिः, व्याप्यवृत्त्यभावान्तरप्रतियोगितावच्छेदकानतिरिक्तवृत्तित्वस्य संयोगत्वादौ सत्त्वेन तदवच्छिन्नसाध्यकव्यभिचारिण्यतिव्याप्त्यप्रसक्तेरिति यथाश्रुताशयोऽवगम्यते, स च न सङ्गच्छते, सत्तावान् जातेरित्यादौ सत्तात्वस्य हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकविशिष्टसत्तात्वाद्यनतिरिक्तवृत्तितया सत्तात्वसाधारणतया अव्याप्तिवारणाय स्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वरूपतदनतिरिक्तवृत्तित्वस्यैव विवक्षणीयतया तद्घटकाभावे व्याप्यवृत्तित्वनिवेशे प्रयोजनविरहेण संयोगादिसाध्यकसद्धेतौ हेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकसंयोगत्वादेर्निरुक्तानतिरिक्तवृत्तित्वस्य संयोगत्वादिसाधारण्यविरहेणाव्याप्त्यनवकाशेन हेतुसमानाधिकरणाभावे व्याप्यवृत्तित्वनिवेशनवैयर्थ्यात्। न च स्वविशिष्टसम्बन्धिनिष्ठाभावे व्याप्यवृत्तित्वविशेषणदाने संयोगेन द्रव्यस्याव्याप्यवृत्तितापक्षे संयोगेन साध्यतायां हेतुसमानाधिकरणसाध्यतावच्छेदकसम्बन्धावच्छिन्नाभावप्रतियोगितावच्छेदक यद्विशिष्टसम्बन्धिनिष्ठाभावीयसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदक तादृशधर्माप्रसिद्धिः तादृशाभावप्रतियोगितावच्छेदकीभूतसकलधर्मावच्छिन्नानामेव संयोगेनाभावानां केवलान्वयित्वादिति स्वविशिष्टसम्बन्धिनिष्ठाभावे व्याप्यवृत्तित्वविशेषणस्य आवश्यकतेति वाच्यम्, संयोगाद्यभावव्यावर्तकस्यावच्छिन्नवृत्तिकान्यत्वरूपव्याप्यवृत्तित्वस्य निवेशने संयोगेन साध्यताया हेतुसमानाधिकरणसाध्यतावच्छेदकसम्बन्धावच्छिन्नाभावो गुणादीनामेव व्याप्यवृत्तिः, न तु द्रव्यस्येति तादृशाभावप्रतियोगितावच्छेदक यद्विशिष्टसम्बन्धिनिष्ठतादृशाभावप्रतियोगितानवच्छेदक तादृशधर्माप्रसिद्धितादवस्थ्यात् प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं परित्यज्य एकसम्बन्धावच्छिन्नत्वस्य विशेषणताविशेषावच्छिन्नत्वस्य वा विशेषणत्वपक्षस्यैव अवलम्बनीयतया व्याप्यवृत्तित्वविशेषणवैयर्थ्यस्य दुरुद्धरत्वात्,

[दी] भवति च गुणत्वगुणावृत्तित्व द्रव्यमात्रसमवेतत्वाद्यवच्छिन्नप्रतियोगिताकव्याप्यवृत्त्यभावप्रतियोगितावच्छेदकगुणत्वाद्यनतिरिक्तवृत्त्येव संयोगत्वमित्याहुः । साध्यतावच्छेदकविशिष्टसाध्यासामानाधिकरण्यावच्छेदकस्वसमानाधिकरण-

---

तस्माद्वक्ष्यमाणं चेति अन्यस्याभावे व्याप्यवृत्तित्वविशेषणं न देयमेव, तद्दानेपि संयोगत्वादौ द्रव्यत्वसमानाधिकरणाभावप्रतियोगित्वीयपारिभाषिकावच्छेदकत्वविरहेण अव्याप्त्यप्रसक्तेरित्याशयः ।

तत्र च पारिभाषिकावच्छेदकत्वशरीरनिविष्टस्वविशिष्टसम्बन्धिनिष्ठाभावे व्याप्यवृत्तित्वविशेषणमावश्यकम्, अन्यथा तुल्ययुक्त्या सत्तादिहेतुकेपि संयोगत्वादौ पारिभाषिकावच्छेदकत्वानिर्वाहादिति हेतुमन्निष्ठाभावेपि तद्विशेषणमावश्यकम्, अन्यथा उक्तासंगतिरित्याशङ्कां सत्तादिहेतुकस्थले गुणत्वाद्यवच्छिन्नाभावप्रतियोगितायाः पारिभाषिकावच्छेदकत्वं संयोगत्वादौ प्रदर्श्य वारयति—भवतिचे ति । गुणत्वाद्यवच्छिन्नाभावानां व्याप्यवृत्तित्वाभिधानं तु संयोगत्वविशिष्टसम्बन्धिनिष्ठाभावप्रतियोगितानवच्छेदकत्वसूचनाय. जन्यद्रव्येप्युत्पत्तिकालावच्छेदेन गुणत्वावच्छिन्नाभावस्य नवीनैरुपगमात् तन्मते गुणत्वस्य संयोगत्वविशिष्टसम्बन्धिनिष्ठाभावीयप्रतियोगितानवच्छेदकत्वं न सम्भवतीति गुणवृत्तित्वानुधावनम्, संयोगो गुणान्यत्वे सति सत्वादित्यादौ गुणावृत्तित्वं न विशिष्टहेतुसमानाधिकरणाभावप्रतियोगितावच्छेदकम्, अतः संयोगसाध्यकव्यभिचारिमात्रसाधारणप्रतियोगितावच्छेदकमुपादाय संयोगत्वस्य पारिभाषिकावच्छेदकत्वं सम्भवति तादृशं धर्ममाह — द्रव्यमात्रसमवेतत्वे ति ।

इति चक्रवर्तिलक्षणम् ।

अथ प्रगल्भलक्षणम् ।

प्रगल्भस्य लक्षणद्वयं एकदोषेण दूषयितुमुपन्यस्यति - साध्यतावच्छेदकविशिष्टेत्यादि । विशिष्टाभावो विशेष्यविशेषणसम्बन्धाभाव

रूपः, उभयाभावन्तु परम्परासम्बन्धेन द्वित्वाभाव इति मतेनेदं लक्षणम्, अन्यथा व्यधिकरणधर्मावच्छिन्नाभाव विनापि लक्षणसमन्वयसम्भवे प्रतियोग्यप्रसिद्धे ति ग्रन्थानुत्थितिरिति बोध्यम्, अथ वा साध्याभावपदं साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावपरमिति । अवच्छेदकत्वमिहानतिरिक्तवृत्तित्वम्, न तु स्वरूपसम्बन्धविशेषः, यथोक्तधर्मयोस्तादृशावच्छेद्यावच्छेदकभावे मानाभावात्; स्वपदं हेतुतावच्छेदकावच्छिन्नपरम्. तथाच साध्यतावच्छेदकविशिष्टसाध्यसामानाधिकरण्यानतिरिक्तवृत्तियद्धर्मविशिष्टसमानाधिकरणसाध्याभावत्वं तद्धर्मवत्त्वं व्याप्तिरिति समुदितार्थः, सद्धेतौ साध्यासमानाधिकरणस्य साध्यतावच्छेदकावच्छिन्नसाध्याभावस्य हेत्वसमानाधिकरणत्वनियमात्तादृशसाध्याभावत्वं साध्यसामानाधिकरण्यानतिरिक्तवृत्तीति लक्षणसमन्वयः । व्यभिचारिणि तादृशसाध्याभावस्यापि हेतुसमानाधिकरणतया तदतिरिक्तवृत्त्येव तदिति नातिव्याप्तिः । गुणान्यत्वविशिष्टसत्तावान् जातेरित्यादावतिव्याप्तेर्वारणाय साध्यतावच्छेदकविशिष्टे ति । साध्याधिकरणत्वं साध्यतावच्छेदकसम्बन्धेन बोध्यम्, तेन संयोगादिना धूमादेरभावस्य समवायादिना धूमादिमति स्वावयवे वृत्तावपि नातिव्याप्तिः । द्रव्यं विशिष्टसत्त्वादित्यादौ अव्याप्तिवारणाय हेतुतावच्छेदकविशिष्टत्वोपादानम्, तद्विशिष्टाधिकरणं हेतुतावच्छेदकसम्बन्धेन बोध्यम्, तेन धूमादिसमवायिनिष्ठवह्नित्वावच्छिन्नवह्न्याद्यभावस्य वह्न्यादिसामानाधिकरण्यविरहेऽपि न क्षतिः । साध्यहेतुसामानाधिकरण्यघटकवृत्तित्वं दैशिकविशेषणतासम्बन्धेन बोध्यम्, तेन द्रव्यं सत्त्वादित्यादौ दैशिकविशेषणतया हेतुसमानाधिकरणस्य द्रव्यत्वत्वावच्छिन्नद्रव्यत्वाद्यभावस्य कालिकसम्बन्धेन साध्यवन्महाकालादिवृत्तित्वेऽपि न क्षतिः ।

[दी] साध्याभाववत्त्वकत्वम्, यत्समानाधिकरणसाध्याभावप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्वं नास्ति तत्त्वं वा व्याप्तिरिति तु न युक्तं,

---

यद्यपि हेतुसमानाधिकरणसाध्याभावत्वघटकप्रमावत्त्वरूपं विशेष्यं व्यतिरेकिसाध्यके साध्यासमानाधिकरणाभावसाधारणमिति विशिष्टसाध्यसामानाधिकरण्यशून्यावृत्तित्वरूपं तदनतिरिक्तवृत्तित्वं दुर्वचम्, तथापि यावन्तस्तत्समानाधिकरणसाध्याभावाः विशिष्टसाध्यसमानाधिकरणा इत्यर्थस्य विवक्षणीयत्वान्न दोषः । यत्समानाधिकरणे ति । यद्रूपविशिष्टसमानाधिकरणेत्यर्थः, तेन " द्रव्यं- गुणकर्मान्यत्वे सति सत्त्वात् " इत्यादौ सत्तासमानाधिकरणद्रव्यत्वत्वावच्छिन्नद्रव्यत्वाभावप्रमायां साध्यवत्ताज्ञानप्रतिबन्धकत्वेपि न क्षतिः । यद्धर्मावच्छिन्नसामानाधिकरण्यशरीरे च हेतुतावच्छेदकसम्बन्धेन यद्धर्मावच्छिन्नाधिकरणत्वं निवेशनीयम्, तत्प्रयोजनं च स्फुटमेव; अधिकरणवृत्तित्वं च निरवच्छिन्नं ग्राह्यम्, तेन कपिसंयोगी एतद्वृक्षत्वादित्यादौ हेतुसमानाधिकरणकपिसंयोगाभावादिविषयकप्रमाया अव्याप्यवृत्तित्वज्ञानविरहकालिकायाः साध्यवत्ताज्ञानप्रतिबन्धकत्वेपि न क्षतिः । **प्रमायाम्**— प्रमासामान्ये; तेन व्यभिचारिणि नातिव्याप्तिः । समानाधिकरणधर्मावच्छिन्नाभावत्वेन व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्ताज्ञानस्यापि विरोधित्वात् सद्धेतावपि लक्षणगमनासम्भव इत्यतो ज्ञानसामान्यमुपेक्ष्य प्रमासामान्यनिवेशनम् । प्रमापदं च यावद्भ्रमभिन्नपरम्, अत उक्तभ्रमात्मकज्ञानस्याभावत्वांशे प्रमात्वेपि न क्षतिः । साध्यवत्ताज्ञानपदमपि तत्सामान्यपरम्, अतो व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्ताज्ञानस्य तद्धर्मवत्त्वेन साध्यवत्ताज्ञानविरोधित्वेपि न क्षतिः, एवञ्च साध्यपदं साध्यतावच्छेदकविशिष्टपरम्, ज्ञानञ्च स्वसमानधर्मितावच्छेदककत्वेन स्वविषयीभूताभावप्रतियोगितावच्छेदकसम्बन्धसंसर्गकत्वेन च विशेषणीयम्, अतो धूमत्वाद्यवच्छिन्न

[दी] सर्वत्र साध्याभावपदवैयर्थ्यात् ।

---

संयोगसम्बन्धावच्छिन्नप्रतियोगिताकधूमाद्यभाववत्ताज्ञानस्य साध्यवत्ताज्ञान सामान्यान्तर्गतं द्रव्यत्वादिना धूमादिप्रकारक भिन्नधर्मावच्छिन्नविशेष्यक धूमत्वावच्छिन्नप्रकारक समवायादिसम्बन्धेन धूमत्वाद्यवच्छिन्नप्रकारक च ज्ञानं प्रत्यप्रतिबन्धकत्वात् कामिनीजिज्ञासादेरेव तादृशज्ञानसामान्ये विरोधित्वादतिव्याप्तेरनवकाश ।

**साध्याभावपदवैयर्थ्या** दिति । अत्र च साध्यतावच्छेदकविशिष्टसामानाधिकरण्यावच्छेदकत्व स्वव्यापकतादृशसामानाधिकरण्यकत्वम् , तथाच साध्यतावच्छेदकविशिष्टसामानाधिकरण्यत्व यत्समानाधिकरणसाध्याभावत्व व्यापकतावच्छेदक तत्त्व व्याप्तिरित्येतादृशार्थकत्वे प्रथमलक्षणे न साध्याभावपदवैयर्थ्यम् . यत्समानाधिकरणनिष्ठाभावप्रतियोगितावच्छेदक स्वाभावरूपयत्सामानाधिकरण्यव्यापकतावच्छेदकत्वात् यत्समानाधिकरण साध्याभावनिष्ठाभावप्रतियोगितावच्छेदकत्वाभावरूपस्य यत्समानाधिकरण साध्याभावत्वव्यापकतावच्छेदकत्वस्यातिरिक्ततया तद्घटितलक्षणे यत्सामानाधिकरण्यव्यापकतावच्छेदकत्वस्यानिवेशात् तद्घटितलक्षणसम्भवे प्रकृतलक्षणवैयर्थ्यानवकाशात् । एवं यत्समानाधिकरणसाध्याभावप्रमात्व व्यापकः साध्यवत्ताज्ञानप्रतिबन्धकत्वाभाव. तत्त्वमित्येतादृशार्थकत्वे द्वितीय लक्षणेपि न तद्वैयर्थ्यम् , यत्समानाधिकरणप्रमात्वव्यापकताघटकाभावात् यत्समानाधिकरणसाध्याभावप्रमात्वव्यापकताया प्रमात्वान्तरस्यैव निवेशादि त्यवधेयम् ॥

इति प्रगल्भलक्षणम् ।

---

[दी] यत्तु — साध्याभाववति यद्वृत्तौ प्रकृतानुमितिविरोधित्व

## अथ विशारदलक्षणम् ।

**साध्याभाववती** ति । यन्निष्ठसाध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितविषयितासामान्ये प्रकृतानुमितिप्रतिबन्धकतावच्छेदकत्वाभावस्तत्त्वमित्यर्थः । वह्निमान् धूमादित्यादौ हेतुनिष्ठसाध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितविषयिता व्यधिकरणधर्मावच्छिन्नाभाववद्वृत्तित्वविषयितैव, सा च न वह्न्यनुमितिं प्रति प्रतिबन्धकतावच्छेदिका, तच्छालिज्ञानस्यानुमित्यप्रतिबन्धकत्वात्. व्यभिचारिणि साध्यतावच्छेदकावच्छिन्नसाध्याभाववद्वृत्तित्वविषयितापि तादृशी, तद्वतो ज्ञानस्य व्यभिचारज्ञानविधयानुमितिप्रतिबन्धकत्वात् तादृशविषयितया अनुमितिप्रतिबन्धकतावच्छेदकत्वान्नातिव्याप्ति । यन्निष्ठत्वानुपादाने धूमाद्यंशे वह्नित्वावच्छिन्नवह्न्यभाववद्वृत्तित्वावगाहिभ्रमनिष्ठवदि वेन वह्न्यभाववद्वृत्तित्वत्वविशिष्टनिरूपितविषयितया अप्यनुमितिप्रतिबन्धकतावच्छेदकत्वाद्वह्निमान् धूमादित्यादावव्याप्ति, अतस्तदुपादानम्, तथाच भ्रमविषयवह्न्यभाववद्वृत्तित्वस्य हेतुनिष्ठत्वाभावान्न दोष ।

यन्निष्ठपदार्थनिरूपितविषयितासामान्ये यन्निष्ठसाध्याभाववद्वृत्तित्वनिविषयितासामान्य इति वा यद्युच्यते' तदा व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वमेव यत्र समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वेन भातम्, तादृशज्ञानीयहेतुनिष्ठतथाविधसाध्याभाववद्वृत्तित्वविषयितायाः अप्यनुमितिप्रतिबन्धकतावच्छेदकत्वादसम्भव अव्याप्तिर्वेति साध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितत्व विषयिताविशेषणम्, तादृशभ्रमविषयिता च न साध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपिता, तादृशविषयितानिरूपकस्य व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वस्य विशेषणीभूत समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्व तद्विशिष्टत्वाभावात् । नच तद्विशिष्ट-

निरूपितत्वं यदि तदवच्छिन्ननिरूपकताकत्वम् ? तदा समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वस्य तद्भ्रमविषयवृत्तित्वसत्त्वेऽपि तन्निष्ठविषयितानिरूपकत्वे व्यधिकरणीभूयावच्छेदकत्वात् भ्रमविषयितायास्तद्विशिष्टनिरूपितत्वमक्षतमेव; यदि च वस्तुगत्या यत्र तद्वैशिष्ट्य तन्निरूपितत्वमेव विशिष्टनिरूपितत्वम् ? तदा व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितत्वमेवोक्तभ्रमविषयताया अक्षतमिति कथं तद्व्यावृत्तिरिति वाच्यम्; विशेषणीभूतधर्मान्तरविशिष्टेन व्यावर्त्यमानस्य विशेष्यस्य भाने विशेषणांशे प्रकारीभवत्या व्यक्तौ विशेष्यसम्बन्धितावच्छेदकताया भानात् साध्याभाववद्वृत्तित्वत्वरूपविशेषणविशिष्टविषयेण निरूपकीभूय विषयिताव्यावर्तने व्यावर्तकविषयस्य आश्रयतया व्यावर्तन यत्साध्याभाववद्वृत्तितात्व तस्यापि निरूपकतावच्छेदकीभूय विषयिताव्यावर्तकत्वादुक्तभ्रमविषयिताव्यावृत्ति ,तद्व्यावर्तक विषयाव्यावर्तकस्य तन्निष्ठसाध्याभाववद्वृत्तितात्वस्य तादृशविषयितानिरूपकतानवच्छेदकत्वादिति तादृशविषयिताया लक्षणाघटकत्वात्, एवञ्चोक्तभ्रमविषयिताव्यावर्तकतयैव साध्याभाववत्पदसार्थक्यम्, तादृशविषयिताया उक्तक्रमेण हेतुनिष्ठसाध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितत्वेऽपि हेतुनिष्ठाधेयतात्वविशिष्टनिरूपितत्वानपायात्. साध्याभावमनुपादायाधिकरणवृत्तितात्वविशिष्टविषयितानिवेशे वृत्तौ समानाधिकरणधर्मावच्छिन्नाभावाधिकरणीयत्वभ्रमविषयितावारणेऽपि वृत्तिविशेषणे तन्निरूपके अधिकरणे समानाधिकरणधर्मावच्छिन्नाभावभ्रमविषयितावारणसम्भवात्साध्याभावांशनिवेशस्यापि सार्थक्यात् । नच तावत्पर्यन्तनिवेशेऽपि वह्नित्वावच्छिन्नवह्निप्रतियोगिताकत्वेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकवह्न्यभाववमवगाह्य तादृशाभाववद्वृत्तित्वावगाहि यज्ज्ञानं तदीयतादृशसाध्याभाववद्वृत्तित्वविषयतापि साध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितैव, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताको य स्साध्याभाव स्तद्वद्वृत्तित्वस्यैव वह्निविशेषणतया भानात् वह्निविशिष्टत्वस्य तादृशज्ञाननिष्ठविषयितानिरूपकसाध्याभाववद्वृत्तित्वे सत्त्वादिति तदीयतादवस्थ्यमिति वाच्यम्, अभावांशे साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगि-

विषयिकज्ञानसामान्यस्यानुमित्यप्रतिबन्धकत्वमुपेक्ष्य निरुक्तविषयितासामान्ये अनुमितिप्रतिबन्धकतावच्छेदकत्वाभावपर्यवसानम् । अवच्छेदकत्वं च स्वरूपसम्बन्धविशेषः, ननु धूमाभाववद्वृत्तित्वत्वेन घटादिविषयकज्ञानस्यानुमितिप्रतिबन्धकतया धूमाभाववद्वृत्तित्वस्य विशिष्टविषयताशालिज्ञानत्वेन प्रतिबन्धकताकल्पनस्य असम्भवात्तादृशविषयिताया प्रतिबन्धकतानिरूपितस्वरूपसम्बन्धरूपावच्छेदकत्वासत्त्वेनातिव्याप्तिरिति वाच्यम्, धूमाभाववद्वृत्तित्वत्वप्रकारतानिरूपितविषयिताशालिज्ञानत्वेन असाधारणप्रतिबन्धकताकल्पनसम्भवात् तादृशविषयितात्वेन वास्तवधूमाभाववद्वृत्तित्वविशिष्टनिरूपितविषयिताया अपि प्रतिबन्धकतावच्छेदकत्वस्याक्षतत्वात् । नचैवं समानाधिकरणधर्मावच्छिन्नसाध्याभावव्यधिकरणधर्मावच्छिन्नसाध्याभावद्वयविशेषिताधिकरणवृत्तित्वावगाहिनि समानाधिकरणधर्मावच्छिन्नाभावांशे भ्रमरूपज्ञानस्य विषयिताया व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वविशिष्टनिरूपितत्वात्समानाधिकरणधर्मावच्छिन्नसाध्याभावविषयितानिरूपिताधिकरणविषयितानिरूपिताधेयत्वविषयितात्वेन च प्रतिबन्धकतावच्छेदकत्वादव्याप्तिरिति वाच्यम्, हेतुसामानाधिकरण्यविशिष्टसाध्याभावत्वविशिष्टविषयिताया प्रतिबन्धकतावच्छेदकत्वाभावस्य विवक्षणीयत्वात्, उक्तभ्रमे च समानाधिकरणधर्मावच्छिन्नाभावविषयितायास्तादृशविशिष्टानिरूपितत्वाभावेन तस्या एव च प्रतिबन्धकतावच्छेदकत्वेनाव्याप्त्यनवकाशात् ।

अथ यत्र ज्ञाने हेतुसमानाधिकरणतया भासमाने व्यधिकरणधर्मावच्छिन्नाभावे व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वोभयसम्बन्धेन साध्यस्यैका प्रकारता तादृशज्ञानीयव्यधिकरणधर्मावच्छिन्नाभावीयविषयिताया साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यविशिष्टाभावनिरूपितत्वस्य विषयीभव

दमात्रे साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वासत्त्वेन असम्भवेपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यविशिष्टाभावनिरूपितत्वस्य साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धाविषयितानिरूपितविषयितात्वेन अनुमितिप्रतिबन्धकतावच्छेदकत्वस्य चाप्रसक्तत्वात् अव्याप्तिर्दुर्वारैवेति चेन्न; तादृशप्रमाया अप्रामाणिकत्वात्, प्रामाणिकत्वे च संसर्गीयविषयिताद्वयानिरूपकतया लक्षणघटकत्वेन अभावविषयितायाः विशेषणीयतया सामञ्जस्यात् ।

अथ साध्यरूपविशेषणविशिष्टस्याभावस्य विषयितानिरूपकतया लक्षणघटकत्वे साध्याभावयोः सम्बन्धस्य सम्बन्धविधया लक्षणघटकत्वमावश्यकम्, स च सम्बन्धः साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकत्वरूपो व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वरूपश्चाननुगत इति प्रथमस्य निवेशे केवलान्वयिनि साध्यविशेषिताभावस्यैव अप्रसिद्धिः, व्यतिरेकिसाध्यकसद्धेतौ च तादृशहेतुसमानाधिकरणाभावाप्रसिद्धिरित्यसम्भवः, चरमस्य निवेशे च सर्वत्र व्यभिचारिण्यतिव्याप्तिः, प्रतियोगितावच्छेदकधर्माणां चोपलक्षणीभूतेन केनचिद्रूपेण अनुगमय्य निवेशो न सम्भवति, प्रतियोगितावच्छेदकोपलक्षणस्य सम्बन्धघटकतया अभानात्; न चावच्छेदकावच्छिन्नत्वादिविशेषितप्रतियोगितायाः सम्बन्धतया निवेशादननुगमनिबन्धनो दोष इति वाच्यम्, अवच्छेदकावच्छिन्नत्वाविशेषितप्रतियोगिताविषयकाभावज्ञानस्य प्रतियोगिप्रकारकज्ञानाविशेषितया तज्ज्ञानाविरोधिनः प्रतियोगिविशेषिताभावज्ञानस्यानुभवविरुद्धतया अवच्छेदकावच्छिन्नत्वाविशेषितप्रतियोगितायाः संसर्गतया अभानात्, न च स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन साध्यतावच्छेदकविशेषित एव अभावो निवेश्य, न तु साध्यविशेषित, वह्नित्वादिना घटाद्यभाव एव वह्न्यादिसाध्यकधूमादिहेतुकत्वे लक्षणघटक इति वाच्यम्, स्वेतरावच्छिन्न[illegible]

तादृशाभावाप्रसिद्धेः, एवं स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्नित्वादिविशेषिते वह्नित्वादिना घटादेरभावे भासमाने यत्र सम्बन्धघटकप्रतियोगितायां बाधितस्य वह्न्यादिनिष्ठत्वस्य भानं तादृशज्ञानीयाभावविषयितायाः उक्तसम्बन्धेन साध्यतावच्छेदकविशिष्टाभावनिरूपितत्वाया अनुमितिविरोधितयाचानुपपत्तेर्दुर्वारत्वात्, स्वावच्छिन्नसाध्यवृत्तित्वविशिष्टप्रतियोगितानिवेशे च सर्वत्र सद्धेतावप्रसिद्धिः, एवं प्रतियोगिविशेष्यतापन्न एवाभावे प्रतियोगिपारतन्त्र्येण समानाधिकरणधर्मस्य स्वातन्त्र्येण व्यधिकरणधर्मस्य स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन प्रकारत्वं प्रामाणिकम्, न तु प्रतियोगिविशेष्यतालाभे, 'वह्निर्नास्ति' 'वह्नित्वेन घटो नास्ति' त्येव प्रतीतेः, न तु वह्नित्वेन नास्तीति, तथाच विशिष्यप्रतियोग्यविशेषितस्य उक्तसम्बन्धेन साध्यतावच्छेदकविशेषितस्याभावस्य विषयित्वनिरूपकतया निवेशो न सम्भवत्येवेति चेत्'—मैवम्, प्रतियोग्यविशेषिताभावीयत्वेन विशिष्टनिरूपितविषयिता लक्षणे न निवेश्यते, अपि तु स्वनिरूपकहेतुसमानाधिकरणाभावनिष्ठो यः सम्बन्धः तत्प्रतियोगिसाध्यनिष्ठतत्सम्बन्धावच्छिन्ननिरूपकतावच्छेदकताकत्वेन, यत्र हेतुसमानाधिकरणघटत्वावच्छिन्नवह्न्याद्यभावे वह्नित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्न्यादेः साध्यस्य प्रकारता तादृशज्ञानविषयितानिरूपकाभावनिष्ठो न निरुक्ततन्निरूपकतावच्छेदकतावच्छेदकः सम्बन्ध इति तद्विषयितान्युदासः, यत्र वह्नित्वावच्छिन्नघटाद्यभावे तन्निष्ठवह्नित्वावच्छिन्नप्रतियोगिताकत्वमेव वह्नेः सम्बन्धतया भासते, तत्र तत्सम्बन्धप्रतियोगी न वह्निः, अपि तु घट एवेति साध्ये वास्तवतत्सम्बन्धप्रतियोगित्वनिवेशात् तादृशज्ञानीयाभावविषयिताव्युदासः, साध्यनिवेशाद्यत्र वह्नित्वेन घट एव वह्नित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन तत्सम्बन्धानुयोगिनि वह्नित्वावच्छिन्नप्रतियोगिताकघटाभावे प्रकारः तादृशज्ञानीयाभावविषयितायाः तत्सम्बन्धप्रतियोग्यवच्छिन्ननिरूपकताकत्वेऽप्यनु

[दी] नास्ति तत्र व्याप्तिरिति, तथा, अनुमित्यविरोधित्वज्ञानस्यानुमितिहेतुत्वे साध्याभाववद्वृत्तित्वज्ञानस्या ऽनुमित्यविरोधितया व्यभिचारिण्यतिप्रसङ्गात् ।

---

मितिविरोधित्वेन च न दोष, यत्र घटत्वावच्छिन्नवह्न्यभावे घटत्वावच्छिन्नप्रतियोगिताकत्वमेव वह्नित्वावच्छिन्नप्रतियोगिताकत्वत्वेन वह्नेः संसर्गतया भासते तादृशज्ञानस्य प्रामाणिकत्वे साध्यप्रतियोगिको हेतुसमानाधिकरणाभावानुयोगिको यद्धर्मावच्छिन्नप्रतियोगिताकत्वत्वविशिष्टसम्बन्ध तद्धर्मावच्छिन्नप्रतियोगिताकत्वत्वविशिष्टसम्बन्धावच्छिन्नसाध्यनिष्ठनिरूपकतावच्छेदकताकत्व विवक्षणीयमिति दिक् ।

नच व्यभिचारज्ञानस्य अनुमितिकारणव्याप्तिज्ञान प्रत्येव प्रतिबन्धकत्वादनुमित्यप्रतिबन्धकत्वादिति व्यभिचारिण्यतिव्याप्तिरिति वाच्यम्, तन्मात्रज्ञानप्रतिबन्धकतावच्छेदकत्वाभावस्यैव विवक्षितत्वात् ।

अनुमित्यविरोधित्वज्ञानस्य — अनुमितिप्रतिबन्धकतावच्छेदकत्वाभावप्रकारकज्ञानस्यैव । अनुमितिहेतुत्वे इति । एतन्मते निरुक्तविषयतानिष्ठतद्दशावच्छेदकत्वाभावघटितस्यैव अनुमितिकारणीभूतज्ञानविषयत्वादिति भाव । अनुमित्यविरोधितया — अनुमितिजनकज्ञानाप्रतिबन्धकतया, साध्याभाववद्वृत्तित्वज्ञानस्यानुमितिजनकत्वाभावादिति भाव । अतिप्रसङ्गा दिति । हेतुनिष्ठसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभाववद्वृत्तित्वविशिष्टतासामान्ये अनुमितिजनकज्ञानप्रतिबन्धकतावच्छेदकत्वाभावस्याक्षतत्वादिति भाव । नच 'हेतुनिष्ठसाध्याभाववद्वृत्तित्व विषयिता अनुमितिप्रतिबन्धकतावच्छेदिका' इत्येतादृशज्ञानीयहेतुनिष्ठता

[टी] केचित्तु—यावन्तस्साध्याभावा प्रत्येकं तत्तत्सजातीया ये

---

ध्याभाववद्वृत्तित्वविषयितायाः अपि तादृशविषयितासामान्यान्तर्गततया तत्र च प्रकृतव्याप्तिज्ञानप्रतिबन्धकतावच्छेदकत्वस्यापि सत्त्वेनातिव्याप्त्य नवकाश इति वाच्यम्, एवं सति सद्धेतावपि हेतुनिष्ठव्यधिकरण धर्मावच्छिन्नाभाववद्वृत्तित्वविषयित्वे अनुमितिप्रतिबन्धकतावच्छेदकत्वभ्रम निष्ठतादृशसाध्याभाववद्वृत्तित्वविषयितायाः अनुमितिप्रतिबन्धकतावच्छेद कत्वसत्त्वेन लक्षणगमनाऽसम्भवादितराविशेषणत्वेन तादृशविषयिताया एव लक्षणे निवेश्यतया विषयिताविशेषणत्वेन साध्याभाववद्वृत्तित्वविषयि-ताया प्रतिबन्धकतावच्छेदकत्वेनातिव्याप्तिवारणासम्भवादिति ध्येयम् ॥

इति विशारदलक्षणम् ।

---

अथ मिश्रलक्षणम् ।

मिश्ररीत्या साजात्य घटनेन साध्याभाववद्वृत्तित्वरूपामेव व्याप्तिं परिष्कृत्योपन्यस्यति—केचित्त्वि ति । धूमवान् वह्नेरित्यादौ व्यधिकरण धर्मावच्छिन्नाभावसजातीयस्य घटत्वादिना तदधिकरणवृत्तित्वाभावस्य हेतौ सत्त्वादतिव्याप्ति अतो यावन्त इति । तथाच यावदन्तर्गतसमा नाधिकरणधर्मावच्छिन्नाभावसजातीयस्य तदधिकरणवृत्तित्वाभावस्य हेता-वसत्त्वान्नातिव्याप्ति, तत्रैव समानाधिकरणधर्मावच्छिन्नसाध्याभावाधिकरण वृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तिवारणाय प्रत्येकं तत्तत्सजातीया इति । तथाच वक्ष्यमाणरूपेण व्यधिकरणधर्मावच्छिन्न साध्याभाववद्वृत्तित्वाभावस्य समानाधिकरणधर्मावच्छिन्नसाध्याभावसजा-

[दी] तत्तदधिकरणवृत्तित्वाभावा तद्वत्त्व तत्त्वम् , साजात्य च समानासमानाधिकरण–

---

तीयत्वाभावान्न दोष । यावत्साध्याभावत्वेन साध्याभावाना निरूपकत्वया साजात्ये अन्वये व्यतिरेकिसाध्यके वह्निमान् धूमादित्यादौ यावत्साध्याभावनिरूपितत्वस्य क्वचिदपि साजात्ये असत्त्वाद्यावत्साध्याभावसाजात्याप्रसिद्ध्या अव्याप्ति, अत तत्तद्व्यक्तित्वेन तेषा साजात्ये अन्वयलाभाय तत्तद्विति तत्तत्साजातीया इत्यनेन उपस्थिताना समानाधिकरणव्यधिकरणधर्मावच्छिन्नाभावसजातीयानामेकस्मिन्नधिकरणवृत्तित्वाभावे एकत्र द्वय' मिति रीत्या ऽभेदान्वये पुन व्यतिरेकिसाध्यके अव्याप्ति, एकत्रोभयसाजात्याभावात् , अत एकैकाभावे एकैकाभावसजातीयाभेदान्वय उपगन्तव्य, एतदर्थतात्पर्यग्राहक प्रत्येक मिति प्रथमाबहुवचनान्त तत्तदधिकरणवृत्तित्वाभावा इत्यस्य विशेषणम् यावत्साध्याभावत्वेन साध्याभावानामधिकरणे अन्वये वह्निमान् धूमादित्यादौ तत्तद्भेदावृत्तित्वावच्छिन्नसाध्याभावघटितसमुदायाधिकरणताया क्वचिदप्यसत्त्वेन अव्याप्तिस्स्यात्, अत तद्व्याप्तित्वेन भावानामधिकरणे अन्वयलाभाय चरम वसदिति । तत्त्व मिति । अव्यभिचरितत्वमित्यर्थ ।

ननु तत्सजातीयत्व तत्तद्वृत्तिधर्मवत्त्वम् , तथाच समानाधिकरणधर्मावच्छिन्नाभाववृत्त्यभावत्वादिधर्मवत्त्व व्यधिकरणधर्मावच्छिन्नाभावेऽपि वर्तत इति तस्यापि तत्सजातीयत्वाद्व्यभिचारिण्यतिव्याप्तिरत आह–साजात्यञ्चेति । समानासमानाधिकरणे ति । समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपेणेत्यर्थ । तृतीयार्थश्च अभेद तस्य च साजात्ये अन्वय, "विवक्षणीय"

[दी]   धर्मावच्छिन्नप्रतियोगिताकत्वान्यतररूपेण,

---

मिति शेष, तथाच तत्तत्सजातीया इत्यस्य तत्तदभाववृत्तिताद्दशान्य तररूपवन्त इत्यर्थ ।

यद्यपि वह्नित्वाद्यवच्छिन्नवह्न्यभावनिष्ठस्वसमानाधिकरणधर्मावच्छि न्नप्रतियोगिताकत्व स्वसमानाधिकरणवह्नित्वाद्यवच्छिन्नप्रतियोगिताकत्वरू पम्, तच्च तदधिकरणवृत्तित्वाभावे असम्भावितमेव, तथापि स्वासमा नाधिकरणधर्मावच्छिन्ना या या प्रतियोगिता तत्तदनिरूपकत्व समानाधि करणधर्मावच्छिन्नप्रतियोगिताकत्वम्, स्वसमानाधिकरणधर्मावच्छिन्ना या या प्रतियोगिता तत्तदनिरूपकत्वमेव च व्यधिकरणधर्मावच्छिन्नप्रतियोगि ताकत्वमिह विवक्षणीयम्, तच्च साध्याभावतद्वद्वृत्तित्वाभावोभयसाधा रणमेव, समनियताभावैक्यमते च स्वाधिकरणावृत्तिधर्मावच्छिन्ना या प्रतियोगिता तन्निरूपकत्वरूपो व्यधिकरणधर्मावच्छिन्नप्रतियोगिता कत्वे त्वस्य यथाश्रुतार्थ एवादरणीय, तन्मते व्यधिकरणधर्मावच्छिन्न साध्याभावतथाविधतद्वद्वृत्तित्वाभावयोरैक्या तादृशसाध्याभावस्य यादृश प्रतियोगितानिरूपकत्व तादृशप्रतियोगितानिरूपकत्वस्य तथाविधतद्वद्वृ त्तित्वाभावेपि सत्त्वात्। एतेन समनियताभावैक्यमते व्यधिकरणधर्मा- वच्छिन्नाभावस्य समवायादिसम्बन्धावच्छिन्नगगनत्वाद्यवच्छिन्नगगनाद्यभावा भिन्नतया तस्य समानाधिकरणधर्मावच्छिन्नगगनादिनिष्ठप्रतियोगितानिरूप कतया व्यधिकरणधर्मावच्छिन्नाभावस्य निरुक्तरूपवत्त्वानुपपत्त्या समा नाधिकरणधर्मावच्छिन्नसमानाधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकत्वपर्य- न्तनिवेशनायासो नोपादेय, समनियताभावैक्यमते गगनाभावत्वगगना भावभिन्नत्वान्यतररूपेणापि साजात्यविवक्षण सम्भवतीति ध्येयम्।

[व्री] व्याप्यवृत्तिश्च

अन्यथा साध्यवत्युत्पत्तिकालावच्छेदेन वह्नित्वद्रव्यत्वाद्यवच्छिन्नस्य संयोगसम्बन्धेनाभावसत्त्वात् साध्यतावच्छेदकसम्बन्धघटितव्यापकतावच्छेदकत्वस्यैवाऽप्रसिद्धिप्रसङ्गात्; तथाच तत्पदाधिकरणपदेन तत्तदभावीयव्याप्यवृत्तित्वनिरूपकाधिकरणमेव विवक्षणीयम्, व्याप्यवृत्तित्वनिरूपकत्वं निरवच्छिन्नाधेयतानिरूपकत्वम्; एवञ्च संयोगाद्यभावस्य तथाविधाधिकरणं गुणादिरेवेति न दोषः, इत्थञ्च कपिसंयोगाभाववान् कपिसंयोगाधिकरणत्वाभाववान् वा भेदत्वादित्यादौ कपिसंयोगतदधिकरणत्वादिरूपाणां यावत्साध्याभावान्तःपातिनां अभावानां तथाविधाधिकरणाप्रसिध्या अव्याप्तिः, अतः साध्याभावं व्याप्यवृत्तित्वेन विशिनष्टि— व्याप्यवृत्तिश्चेति। तथाच तादृशाभावस्य तथाविधयावदनन्तर्गततया तथाविधाधिकरणाप्रसिद्धावपि न क्षतिः। व्याप्यवृत्तित्वञ्च निरवच्छिन्नवृत्तिकत्वम्, नत्ववच्छिन्नवृत्तिकान्यत्वम्, तथा सति संयोगेन धूमादिसाध्यकव्यभिचारिणि संयोगेन धूमत्वाद्यवच्छिन्नधूमाभावस्य महानसाद्यनवच्छिन्नवृत्तिकतया अयोगोलकान्यत्वाद्यभावं साध्यतावच्छेदकसम्बन्धघटितव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वविरहेण व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्यैव लक्षणघटकतया अतिव्याप्तिः; एवञ्च वह्न्यभावसंयोगाभावादेरपि क्वचिन्निरवच्छिन्नवृत्तिकत्वेन लक्षणघटकतया तदीयाव्याप्यवृत्तितानिरूपकाधिकरणवृत्तित्वाभावमादाय दोषवारणायाधिकरणपदस्य व्याप्यवृत्तितानिरूपकाधिकरणपरत्वमावश्यकमित्यवधेयम्।

ननु कालिकसम्बन्धावच्छिन्नप्रतियोगिताकाकाशाभावाभावे साध्ये ज्ञानत्वादिहेतावव्याप्तिः, व्याप्यवृत्तेः साध्याभावस्य आकाशाभावरूपस्य व्याप्यवृत्तितानिरूपकाधिकरणात्मादौ हेतोः वृत्तेः, अनन्तदभावीयप्रतियोगिता

[टी]　प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणो वा.

---

वच्छेदकावच्छिन्नवैयधिकरण्यनिरूपकाधिकरणमेव तत्तदधिकरणपदेन विव-
क्षणीयम् , प्रतियोगितावच्छेदकावच्छिन्नत्वानिवेशादेतद्रूपान्यत्वविशिष्ट-
गुणत्ववान् गुणत्वादित्यादौ समवायरूपसाध्यतावच्छेदकसम्बन्धघटित-
विशिष्टसाध्यव्यापकतावच्छेदकविशिष्टगुणत्वत्वावच्छिन्नाभावस्य प्रतियोगि
वैयधिकरण्यनिरूपकतायाः हेतुमत्यसत्त्वेऽपि नातिव्याप्तिः ; तथाच कालिक
सम्बन्धावच्छिन्नप्रतियोगिताकाकाशत्वाभावाभावादिसाध्यका ऽऽत्मत्वादिहेतौ
अव्याप्तिः , तत्र व्याप्यवृत्तियावत्साध्याभावान्तःपातिन आकाशत्वाभावादेः
प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्याप्रसिद्धेः , कालेऽप्याकाशावच्छे-
देन तादृशसाध्यरूपतदभावाभावप्रतियोगिसत्त्वात् सर्वत्रैव तादृशाभावस्य
प्रतियोगिसमानाधिकरणत्वात् ; अतो व्याप्यवृत्तित्वमुपेक्ष्य तादृशाभावे
प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यमेव निवेशयति — प्रतियोगिता
वच्छेदकावच्छिन्ने ति । अत्र च समनियताभावैक्यमते विशेषणमेव
व्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितया तत्प्रतियोग्यनधिकरणाप्रसिद्ध्या
तदसंग्रहः ; विशिष्टसाध्यव्यापकतावच्छेदकावच्छिन्नयत्किंचित्प्रतियोगिता-
श्रयवैयधिकरण्यनिवेशे च वाच्यत्वत्वादिना घटाद्यभावस्य घटादिवैयधि
करण्येन लक्षणघटकत्वानिर्वाहेऽपि प्रतियोगिभेदेन प्रतियोगिताभेदमते
जन्यज्ञानविषयत्वादिसाध्यके यत्किञ्चित्कालावच्छेदेन परमाण्वादौ प्रसि-
द्धस्य साध्यतावच्छेदकावच्छिन्नाभावस्य यत्किञ्चित्प्रतियोग्यनधिकरणवृत्तेः
प्रतियोगिवैयधिकरण्यनिरूपकाधिकरणाऽप्रसिद्ध्या अव्याप्तिः , तत्रापि
यत्किञ्चित्प्रतियोगितान्तर्भावेन तादृशानधिकरणत्वप्रसिद्धिसम्पादने यत्किं-
चित्प्रतियोगिताश्रयप्रतियोगिवैयधिकरण्यनिरूपकाधिकरणे हेतोर्वृत्त्या अ-
व्याप्तितादवस्थ्यम् . एवं वह्निमान् धूमादित्यादौ द्रव्यत्वाद्यवच्छिन्नस्य

[दी] साध्याभावश्च पूर्वोक्तद्वितीयरीत्या प्रत्येतव्यः,

---

ननु यावत्साध्याभावान्तर्गतानां तत्तत्साध्यव्यक्त्यभावादीनां म-धिकरणे हेतोर्वृत्तित्वाद्वह्निमान् धूमादित्यादावव्याप्तिरत आह— साध्याभावश्चे ति । द्वितीयरीत्ये ति । यत्समानाधिकरणाना मित्यादिद्वितीयलक्षणरीत्येत्यर्थः । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभाव एव साध्याभावपदेन विवक्षित इति भावः । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकप्रतियोगिताकाभावविवक्षणे तथाविधवह्निघटोभयाभावमादाय तद्दोषतादवस्थ्यम्, अतः प्रथमरीत्येति नोक्तम् । साध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाभावविवक्षणे वाच्यत्वादिसाध्यकस्थले वाच्यत्वत्वादिना घटाद्यभावमादाय लक्षणसमन्वयेपि स्वरूपसम्बन्धेन तादात्म्यसम्बन्धेन वा प्रमेयमात्रसाध्यकस्थले तथाविधाभावाप्रसिद्ध्या अव्याप्तिः, अतो व्यापकतावच्छेदकपर्यन्तानुधावनम्; तथाच ज्ञेयत्वत्वादिना वाच्यत्वाभाव एव तथेति न दोषः । साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावनिवेशे च वह्न्यादिसाध्यके तार्णातार्णोभयाभावादिकमादाय दोषस्य व्यासज्यवृत्तिधर्मावच्छिन्नत्वं प्रतियोगितायां निवेश्य वारणेपि सत्तादिसाध्यकस्थले विशिष्टसत्ताद्यभावमादाय दोष इति तादृशाभावो न निवेशितः, व्यापकतावच्छेदकावच्छिन्नप्रतियोगिता न्यूनवृत्तिधर्मावच्छिन्ना अतिरिक्तवृत्तिधर्मावच्छिन्ना वा या या प्रतियोगिता तत्तदन्यत्वेन विशेषणीया, तेन वह्न्यादिसाध्यकस्थले वह्नित्वादिना महानसीयवह्निघटान्यतराभावमादाय न दोषः । न्यूनवृत्तित्वमतिरिक्तवृत्तित्व च विरुद्धव्यापकत्वं निर्वाच्यम्, नातो व्यधिकरणधर्मावच्छिन्नाभावावग्रहः । व्यापकता च साध्यतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, तेन संयोगादिना वह्न्यादिसाध्यके समवायादि-

ना वह्न्याद्यभावमादायाऽसम्भववारणाय साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वेन प्रतियोगितायां विशेषणीयतया समवायादिना द्रव्यत्वादिसाध्यके विषयितादिसम्बन्धेन साध्यव्यापकस्य ज्ञानादेः स्वसमवायादिना अभावमादाय दोषस्य नावकाशः. तादात्म्यसम्बन्धेन प्रमेयसाध्यकस्थले समवायित्वरूपव्यधिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकताकभेद एव लक्षणघटकः, समनियताभावैक्यमते तादृशभेदस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकात्यन्ताभावाभिन्नतया व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वेन तत्साजात्यस्य प्रसिद्धिसम्भवात् ।

यत्तु— संयोगेन प्रमेयत्ववान्नास्तीति प्रतीतिसाक्षिकः संयोगावच्छिन्नप्रमेयत्वनिष्ठप्रतियोगितावच्छेदकताकभेद एव लक्षणघटकः, अत्यन्ताभावस्येव येन सम्बन्धेन तदवृत्तिर्यो धर्मः तत्सम्बन्धेन तदवच्छिन्नप्रतियोगितावच्छेदकताकभेदस्याप्युक्तप्रतीतिबलात्सिद्धिरिति, तन्न, "वह्निमान् धूमात्" "गुणवान् द्रव्यत्वात्" इत्यादौ विषयितादिसम्बन्धेन वह्नित्वगुणत्वादिमत् साध्यतावच्छेदकसम्बन्धावच्छिन्नाभावस्य व्यावर्तनाय व्यापकतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वेन प्रतियोगितावच्छेदकतायां अवश्यनिवेशनीयतया तादृशाभावस्य प्रामाणिकत्वेपि लक्षणघटकत्वासम्भवात् ।

ननु कपिसंयोग्येतद्वृक्षत्वादित्यादौ कपिसंयोगत्वावच्छिन्नकपिसंयोगाद्यभावस्यापि लक्षणघटकतया तदधिकरणे हेतोर्वृत्तेरव्याप्तिः; न च साध्यतावच्छेदकावच्छिन्नव्यापकताशरीरे प्रतियोगिवैयधिकरण्यनिवेशस्य निष्फलतया कपिसंयोगत्वादेः साध्यव्यापकतावच्छेदकत्वाभावात् तादृशाभावानां न लक्षणघटकत्वेति वाच्यम्; संयोगेन वह्न्यादिसाध्यकस्थले वह्नित्वादीनां संयोगरूपसाध्यतावच्छेदकसम्बन्धघटितव्यापकतावच्छेदकत्वसम्पत्तये व्यापकताशरीरे प्रतियोगिवैयधिकरण्यनिवेशस्यावश्यकत्वात् ।

संयोगेन योऽभाव स्तस्य द्रव्येऽप्युत्पत्तिकालावच्छेदेन वर्तमानस्य गुणादौ प्रतियोगिव्यधिकरणस्य प्रतियोगिवैयधिकरण्यनिरूपकाधिकरणगुणादौ हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्ध्या अव्याप्तिवारणाय हेतुतावच्छेदकसम्बन्धेन कस्यचिदधिकरणे प्रतियोगिवैयधिकरण्यमभावे विशेषणं देयम्; एवञ्च एतद्रूपान्यत्वविशिष्टसत्तावान् जातेरित्यादौ समवायघटितसाध्यव्यापकतावच्छेदकविशिष्टसत्तात्वाद्यवच्छिन्नाभावस्य हेत्वधिकरणे सत्तादिरूपप्रतियोगिसमानाधिकरणतया व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकतयाऽतिव्याप्तिः, अतः प्रतियोगितावच्छेदकावच्छिन्नत्वोपादानम्।

अथ केवलान्वयिस्थले लक्षणघटकानां वाच्यत्वत्वाद्यवच्छिन्नघटाद्यभावानां सर्वेषामेव प्रतियोगितावच्छेदकवाच्यत्वत्वावच्छिन्नानधिकरणाप्रसिद्धिः, नच यत्किंचित्प्रतियोगितावच्छेदकावच्छिन्नानधिकरणवृत्तित्वमेव निवेशनीयम्, तथाच समनियताभावानामैक्योपगमेन व्यतिरेकितावच्छेदकधर्मस्यापि उक्ताभावप्रतियोगितावच्छेदकतया तदवच्छिन्नानधिकरणत्वस्य प्रसिध्या तेषां लक्षणघटकतेति वाच्यम्, तथासति संयोगाभावादिसाध्यकस्थले संयोगात्मकाभावस्य यत्किंचित्प्रतियोगितावच्छेदकसमवेतसामान्याभावत्वावच्छिन्नानधिकरणवृत्तित्वात् तद्व्यावर्तनासम्भवात्. विशिष्टसाध्यव्यापकतावच्छेदकत्वेन प्रतियोगितावच्छेदकविशेषणे उक्तस्थले तादृशप्रतियोगितावच्छेदकावच्छिन्नानधिकरणाप्रसिद्धेः दुर्वारत्वात्, प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणवृत्तित्वनिवेशे च व्यधिकरणधर्मावच्छिन्नाभावस्य प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यप्रसिध्या तादृशप्रतियोगिवैयधिकरण्यं दुर्घटमिति।

अत्र केचित्;— स्वप्रतियोगितावच्छेदकावच्छिन्नस्वप्रतियोगिसमानाधिकरणा ये ये तदन्यत्वं व्यधिकरणान्तार्थः, न तु प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणवृत्तित्वम्; व्यधिकरणधर्मावच्छिन्ना-

भावस्य तादृशप्रतियोग्यप्रसिद्ध्या असङ्ग्रहात् ; नचैवं सति धूमवान् वह्नेरित्यादौ साध्यतावच्छेदकीभूतसंयोगसम्बन्धघटितव्यापकतावच्छेदकधूमत्वावच्छिन्नसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकानां धूमाद्यभावानां उत्पत्तिकालावच्छेदेन धूमादिमति वृत्ते व्यधिकरणधर्मावच्छिन्नाभावस्यैव प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणतया अतिव्याप्तिरिति वाच्यम्, साध्यतावच्छेदकसम्बन्धेन व्यापकतामनिवेश्य येन सम्बन्धेन व्यापकता तत्सम्बन्धावच्छिन्नव्यापकतावच्छेदकावच्छिन्नाभाव निवेश्य विषमिता सम्बन्धेन साध्यव्यापकज्ञानस्य समवायसम्बन्धावच्छिन्नाभावमादायोक्तदोषस्य वारणीयतया अयोगोलकभेदादेरभावमादायातिव्याप्तिवारणसम्भवात्, यादृशप्रतियोगितावच्छेदको यो धर्म तद्विशिष्टतादृशप्रतियोगिताश्रयसामानाधिकरण्य विवक्षणीयम्, तेन समनियताभावैक्यमते तादृश वाच्यत्वत्वादिना घटाद्यभावस्यापि घटत्वादिना वाच्यत्वाभावाभिन्नतया वाच्यत्वादिप्रतियोगिकत्वेन प्रतियोगितावच्छेदकवाच्यत्वत्वादिविशिष्टवाच्यत्वादिरूपप्रतियोगिसमानाधिकरणत्वेपि न क्षतिः, नचैवमपि वाच्यत्वादिसाध्यकस्थले सर्वेषामभावानां पूर्वक्षणादिवृत्तित्वविशिष्टत्वाभावरूपप्रतियोगिसमानाधिकरणतया प्रतियोग्यसमानाधिकरणाभावाप्रसिद्धिरिति वाच्यम्, स्वावच्छेदकविशिष्टस्वाश्रयाधिकरणवृत्त्यभावीयप्रतियोगिताभिन्नत्वेन व्यापकतावच्छेदकावच्छिन्नप्रतियोगिता विशेषणीयेत्यत्रैव प्रतियोगितावच्छेदकेत्यादेः तात्पर्यात् वाच्यत्वत्वावच्छिन्नघटादिनिष्ठप्रतियोगितायाः स्वावच्छेदकविशिष्टस्वाश्रयाप्रसिद्ध्या निरुक्तप्रतियोगिताभिन्नत्वेन तन्निरूपकाभावमादाय वाच्यत्वादिसाध्यके लक्षणसमन्वयसम्भवात् । नच तथापि एतदभावभिन्न मेयत्वादित्यादौ साध्यव्यापकतावच्छेदकसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्यैतदभावमात्रवृत्तेरभावमात्राधिकरणकतया अधिकरणस्वरूपत्वात् एतदभावभेदादिरूपप्रतियोगिसमानाधिकरणतया निरुक्तप्रतियोगिताभिन्नव्यापकतावच्छेदकावच्छिन्न

प्रतियोगिताको ऽभावो व्यधिकरणधर्मावच्छिन्नाभाव एवेत्यतिव्याप्तिरिति वाच्यम्, स्वावच्छेदकविशिष्टस्वाश्रयाधिकरणे स्वनिरूपकाभावत्वेन वर्तते योऽभाव तदीयप्रतियोगिताभिन्नत्वेन व्यापकतावच्छेदकावच्छिन्नप्रतियोगिताया विशेषणीयतया एतदभावाधिकरणे एतदभावभिन्ने एतदभावत्वेन एतदभावरूपैतदभावभेदाभावस्य वृत्तावपि तादृशाधिकरणे एतदभावभेदो नास्तीत्यप्रतीत्या एतदभावभेदत्वावच्छिन्नप्रतियोगिताकाभावत्वेन तस्यावृत्तित्वादेतदभावभेदत्वावच्छिन्नप्रतियोगिताया निरुक्तप्रतियोगिताभेदस्याक्षतत्वादित्याहु,—

तच्चिन्त्यम्, व्यापकताघटकसम्बन्धावच्छिन्नाभावनिवेशे व्यापकताशरीरे प्रतियोगिवैयधिकरण्यस्याभावविशेषणत्वेपि संयोगादिना धूमादेः साध्यकत्वभिचारिणि अयोगोळकान्यत्वाद्यभावमादायातिव्याप्तिवारणसम्भवात्, तत्र तन्निवेशे प्रयोजनाभावेन अव्याप्यवृत्तिसाध्याभावमादाना व्याप्तत्वनयकाशात् तदभावे व्याप्यवृत्तित्वादिविशेषणस्यानुल्यसङ्गते, अस्तु वा साध्यव्यापकतावच्छेदकस्यापि साध्यवन्निष्ठव्यधिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकतया तदभावव्यावर्तनाय व्यापकताशरीरे प्रतियोगिवैयधिकरण्यप्रवेश, तथाप्येतद्व्रप्रतियोग्यसामानाधिकरण्यविवक्षणे तस्याव्याप्तिवारणप्रयोजनकताभिधानासङ्गति, अभावे तन्निवेशे व्याप्यवृत्तिसाध्यकेपि यावत्साध्यवद्विषयकजन्यज्ञानव्यक्तिविशेषस्य प्रतियोगिवैयधिकरण्यघटितसाध्यव्यापकताश्रयत्वात् कालविशेषावच्छेदेन हेतुमति तदभाववृत्तेरसम्भवस्यैव प्रसङ्गात् ।

अत्र वदन्ति,— प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणवृत्तित्वमेव तदर्थ, न च व्यधिकरणधर्मावच्छिन्नाभावस्य प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यप्रसिद्धे केवलान्वयिसाध्यके प्रतियोगितावच्छेदकविशिष्टप्रतियोगिव्यधिकरणयाव्याभावाप्रसिद्धेरव्याप्तिरिति वाच्यम्,

प्रतियोगितावच्छेदकावच्छिन्नप्रतियोग्यनधिकरणवृत्तित्वं हि स्वप्रतियोगितावच्छेदकावच्छिन्नस्वप्रतियोगिवृत्तिप्रतियोगितावच्छेदकताकभेदवद्वृत्तित्वम्, ज्ञेयत्वत्वादिना वाच्यत्वाद्यभावस्य तादृशभेदसमानाधिकरणतया प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यं सुघटमेव, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकज्ञेयत्वत्वादिना वाच्यत्वभेदस्यैव तथात्वात् कपिसंयोगाभाववान् मेयत्वादित्यादौ कपिसंयोगादिरूपसाध्याभावस्यापि ज्ञेयत्वत्वादिना कपिसंयोगाभावादिमद्भेदसामानाधिकरण्यसत्त्वात् तस्य च स्वप्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्यनिरूपकाधिकरणाप्रसिद्ध्या अव्याप्तिः, अतः प्रतियोगितावच्छेदकावच्छिन्नत्वं भेदप्रतियोगितावच्छेदके वा विशेषणम्, तत्रैव कपिसंयोगात्मकाभावीयप्रतियोगितावच्छेदकीभूतसमवेतसामान्याभावत्वावच्छिन्नसमवेतसामान्याभाववद्भेदस्यापि निरुक्तप्रतियोगितावच्छेदकावच्छिन्न प्रतियोगिनिष्ठप्रतियोगितावच्छेदकताकत्वात्तत्सामानाधिकरण्यमादाय कपिसंयोगाद्यात्मकाभावानां प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यवारणाय साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वेन प्रतियोगितावच्छेदके विशेषणीयम्, समवेतसामान्याभावत्वादेः कपिसंयोगाभावादिव्यापकतानवच्छेदकतया न दोषः न चात्र साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वेन प्रतियोगितावच्छेदके विशेषिते तत्तत्साध्यव्यक्त्यभावादीनामीदृशप्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिवैयधिकरण्यं न घटते, साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकीभूतस्वप्रतियोगितावच्छेदकाप्रसिद्धेः, तथा च साध्याभाववत्त्वेत्यादिना साध्याभावपदेन साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावविवक्षणाप्रसक्तिरिति वाच्यम्, साध्याभाववत्त्वेत्यादिग्रन्थस्य व्याप्यवृत्तित्वानिवेशकल्पे अभावे साध्यतावच्छेदकावच्छिन्नत्वादिविशेषणदानपरत्वात्, द्वितीयकल्पे च प्रतियोगितावच्छेदकावच्छिन्नेत्यत्र प्रतियोगितावच्छेदकस्य तादृशव्यापकतावच्छे

दकत्वेन विशेषणात् तादृशरूपावच्छिन्नप्रतियोगिताक एवाभावो लक्षण घटक इत्यर्थकत्वात् एतत्कल्पे अभावांशे तादृशप्रतियोगिताकत्वविशेषण विरहेऽपि क्षतिविरहात् , तत्रैव कपिसंयोगाभावत्वादिना घटादिभेद सामानाधिकरण्यमादाय तद्दोषवारणाय स्वप्रतियोगिवृत्तित्व भेद प्रतियोगितावच्छेदकताया विशेषणम् , संयोगसामान्याभावादेरपि संयोगाद्यात्मकाभावप्रतियोगितया कपिसंयोगात्मकाभावस्य प्रति योगितावच्छेदक कपिसंयोगाभावत्वादिना संयोगसामान्याभाव-भेदसामानाधिकरण्यमादाय तद्दोषतादवस्थ्यवारणाय यादृशप्रति योगितावच्छेदको यो धर्मः तदवच्छिन्नतादृशप्रतियोगिताश्रयवृत्तित्वमेव भेदप्रतियोगितावच्छेदकताया निवेशनीयम्, कपिसंयोगाभावत्वं च कपि संयोगाभावनिष्ठप्रतियोगितायामेव अवच्छेदकम्, संयोगसामान्याभावश्च न तादृशप्रतियोगिताश्रय इति तादृशभेदमादाय न दोषः । भेद प्रतियोगितावच्छेदकताया स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वमपि निवेशनीयम् , तेन कपिसंयोगाभावत्वावच्छिन्नकपिसंयोगाभावादिनिष्ठ विषयितादिसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकभेदसामानाधिकरण्येऽपि न तद्दोषतादवस्थ्यम् . एवं प्रतियोगितावच्छेदकावच्छिन्नवैयधिकरण्य निरूपकता स्वनिष्ठ यत्स्वप्रतियोगितावच्छेदकावच्छिन्नस्वप्रतियोगिनिष्ठ प्रतियोगितावच्छेदकताकभेदसामानाधिकरण्य तन्निरूपकत्वम् , अतो स्वविरुद्धधर्मावच्छिन्नाभावस्य प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यप्रसि द्धावपि न तादृशाधिकरणाप्रसिद्धिः "कपिसंयोग्येतत्त्वा" दित्यादौ हेत्वधि करणेऽपि द्रव्यत्वादिना कपिसंयोगादिमत् कपिसंयोगत्वादिना च द्रव्यत्वादि मतो भेदसत्त्वात् तस्यापि तादृशाधिकरणत्वापत्तेः , अतो ऽवच्छिन्नान्तनिष्ठा न्तयोरुपादानम् पूर्वक्षणादिवृत्तित्वविशिष्टस्वाभावत्वादिरूपप्रतियोगिताव-च्छेदकरूपेण कपिसंयोगादिमद्भेदमादाय तद्दोषतादवस्थ्यम् , अतस्त

स्वप्रतियोगिताश्रयनिष्ठप्रतियोगितावच्छेदकतायां तदवच्छेदकावच्छिन्नत्वं निवेशनीयम् ; एवं विशिष्टसाध्यव्यापकतावच्छेदकत्वेनापि प्रतियोगितावच्छेदकं विशेषणीयम्, तेन संयोगी द्रव्यत्वादित्यादौ संयोगाभावस्य द्रव्यवृत्तित्वविशिष्टत्वावच्छिन्नाभावत्वावच्छिन्नद्रव्यवृत्तित्वविशिष्टत्वावच्छिन्नाभावनिष्ठप्रतियोगितावच्छेदकताकभेदवत्त्वस्य द्रव्ये सत्त्वात्तस्य न प्रतियोगिवैयधिकरण्यनिरूपकत्वापत्ति ; एवं सम्बन्धविशेषनिवेशनमपि पूर्ववद्बोध्यम् । तथाच स्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकतावच्छेदकसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्ना यावत्य प्रतियोगिताः तत्तदवच्छेदकावच्छिन्नतत्तदाश्रयनिष्ठप्रतियोगितावच्छेदकताकभेदवदधिकरणवृत्तित्वव्यापकतास्तत्तत्सजातीयप्रतियोगिताकाभाववत्त्वमिति निष्कर्ष इति।

अभावे यथाश्रुतसाध्यप्रतियोगिकत्वं परित्यज्य स्वप्रतियोगितावच्छेदके साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वविशेषणस्य व्याप्यवृत्तित्वादिविशेषणस्य च व्यावृत्तिमाह– तेने ति । तत्तत्साध्यव्यक्तेरभाववति हेतौ वृत्तावपि नाव्याप्तिरिति योजना. “ एतद्रूपवानेतद्रूपा ” दित्यादौ प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणसाध्याभाववत्त्वस्साध्यमेव, तत्र हेतोः वृत्तेर्लक्षणगमनसम्भवासम्भवः ।

अथ साध्यवति तद्रूपैतद्रूपोभयत्वावच्छिन्नाभावसत्त्वेन तत्रापि लक्षणगमनाभावादसम्भवः ; न च नासौ प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिव्यधिकरणः प्रतियोगितावच्छेदकीभूतोभयत्वेन रूपेणोभयवद्भेदस्य उभयवतोऽसिद्धत्वेन अप्रसिद्धेरिति वाच्यम्, उभयत्वेनान्यतरवद्भेदस्य तादृशाभावप्रतियोगितावच्छेदकावच्छिन्नतत्प्रतियोगिवृत्तिप्रतियोगितावच्छेदकताकस्य उभयाभाववति सत्त्वात्तस्यापि तादृशभेदमादाय तत्त्वादिति चेन्न; व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकस्य स्वव्यापक-

[दी] येन तत्तत्साध्यव्यक्तेरव्याप्यवृत्तेर्वा साध्यस्याभाववति वृत्ता

---

साध्यतावच्छेदकप्रतियोगिताकस्य वा ऽभावस्य निवेशे तादृशोभयाभावादिवारणं सम्भवतीत्यभिप्रायेणाव्याप्तिर्लिखनात् ।

अव्याप्यवृत्ते रिति । यद्यप्येतद्ग्रन्थस्य स्वयमुक्तस्याभावे व्याप्यवृत्तित्वादिनिवेशनस्य प्रयोजनप्रदर्शनपरत्वे साध्यपदं कपिसंयोगाभावादिपरमेव वाच्यम् न तु कपिसंयोगादिपरम्, कपिसंयोगादिसाध्यकस्थले कपिसंयोगाद्यभावस्य लक्षणघटकत्वेऽपि स्वाधिकरणपदस्य व्याप्यवृत्तित्वादिनिरूपकाधिकरणपरतया अभावे व्याप्यवृत्तित्वादिनिवेशोऽप्यावश्यकत्वात् तदीयव्याप्यवृत्तितानिरूपकाधिकरणे गुणादौ हेतोरवृत्तेरव्याप्त्यनवकाशात् कपिसंयोगाभाववद् गुणादौ निरवच्छिन्नवृत्तिकत्वादिरूपव्याप्यवृत्तित्वादिसत्त्वेन तादृशविशेषणेन व्यावर्तनासम्भवाच्च, तथाच कपिसंयोगाभावादिसाध्यकस्थले कपिसंयोगाद्यात्मकाभावस्य लक्षणघटकत्वेऽपि तदीयव्याप्यवृत्तितानिरूपकाधिकरणाप्रसिद्धिरेवाव्याप्तिप्रयोजिका, न तु तादृशाभावीयव्याप्यवृत्तितानिरूपकाधिकरणे हेतोर्वृत्तिरिति वृत्त्यादपि हेतोरिति न सङ्गच्छते, तथाप्यभावे व्याप्यवृत्तित्वविशेषणानुपादाने यावदन्तर्गतकपिसंयोगादीनां व्याप्यवृत्तितानिरूपकाधिकरणाप्रसिद्धिः स्यादिति तादृशाधिकरणपर्यन्तं न विवक्षणीयम्, तथाच सत्यव्याप्यवृत्तिसाध्यकस्थले हेतौ साध्याभाववद्वृत्तित्वानवच्छिन्नत्वाद्व्याप्तिः, सा च व्याप्यवृत्तित्वानुपादानान्न सम्भवतीत्यभिप्रायः ।

अथ वा कपिसंयोगादिसाध्यकहेतौ स्वसाध्याभावीयव्याप्यवृत्तितानिरूपकाधिकरणवृत्तित्वं तत्स्थलीयाव्याप्तिवारकव्याप्यवृत्तितानिरूपकाधिकरणवृत्तित्वानिवेशप्रयोजकम्, अत एतद्ग्रन्थो वा कपिसंयोगाभावादिसाध्यकस्थले कपिसंयोगाद्यात्मकाभावीय तादृशाधिकरणाप्रसिद्धिनिबन्धना

[दी] यदि हेतोर्नाव्याप्ति, तद्वद्वृत्तित्वाभावस्तु तत्तत्साध्याभाववद्वृत्तित्व-
स्वव्यापकव्याप्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताको बोध्य, तेन

ऽव्याप्तिः इतःसम्पादकमपीति न तादृशमव्याप्तिमङ्गति, एतेन कपिसंयो-
गाभावादिसाध्यकस्थले तादृशाधिकरणाप्रसिद्धिभयेन व्याप्यवृत्तितानिरूप-
काधिकरणानिवेशे व्याप्यवृत्तिसाध्यकस्थलेऽपि क्षणविशेषवृत्तित्वविशिष्ट
साध्याभावस्य प्रतियोगिव्यधिकरण्यघटितसाध्यव्यापकतावच्छेदकावच्छि
न्नप्रतियोगिताकव्याप्यवृत्तेरधिकरणं हेतो र्वृत्त्या लक्षणगमनासम्भवात्
असम्भव एव सम्भवतीति अव्याप्तिरिति लिखनं न युज्यत इत्यपि निरस्तम्।

* (एतद्रूपादिसाध्यकस्थले स्वरूपसम्बन्धेन हेतौ साध्यतावच्छेदकसम्ब
न्धघटितव्यापकतावच्छेदकरूपावच्छिन्नाभावीयव्याप्यवृत्तितानिरूपकाधिकर
णत्वस्यासमवायिनि प्रसिद्धेः तत्र तादृशाधिकरणाप्रसिद्धिनिबन्धनलक्षणगम-
नासम्भवादसम्भवाभावात्। तत्तत्साध्याभावाधिकरणवृत्तित्वस्य हेतुवृत्तितानव
च्छेदकविशेषधर्मव्यासज्यवृत्तिधर्मावच्छिन्नाभावमादाय व्यभिचारिण्यतिव्या
प्ति तत्तत्साध्याभाववद्वृत्तित्वत्वावच्छिन्नाभाव निवेश्य चेद्वार्यते तदा व्यधि
करणधर्मावच्छिन्नसाध्याभावसजातीयस्य तादृशस्य तद्वद्वृत्तित्वत्वेन घटा
द्यभावस्य प्रसिद्धिर्गुरुधर्मस्य प्रतियोगितावच्छेदकत्वाङ्गीकार एव सम्भ
वति, अन्यथा तादृशाभाववद्वृत्तित्वत्वस्य वृत्तित्वत्वरूपलघुधर्मसमनियत
तया प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नाभावाप्रसिद्धेः; अन्यूनानति
प्रसक्तस्वरूपावच्छिन्नत्वनिवेशे ह्रदवृत्तित्वकदान्यनिर्धूमवृत्तित्वोभयाभा-
वादेः निर्धूमवृत्तित्वत्वादिसमनियत प्र ति यो गि ता क त या तद्वृत्ति
धूमादिसाध्यकवह्न्यादिहेतावतिव्याप्तेः; तत्तत्साध्याभाववद्वृत्तित्वविशिष्ट
व्यापकतावच्छेदकरूपावच्छिन्नाभावादिनिवेशे च निर्धूमवृत्तित्वत्वादिना ह्रद
वृत्तित्वघटान्यतराभावमादाय तद्दोषतादवस्थ्यमित्यन्यादृशाभाव तत्तदधि
करणवृत्तित्वाभावपदेन विवक्षयति— तद्वदि ति। व्यापकान्तमनवच्छि-

* कुण्डलितग्रन्थ प्राचिनः ।

[दी] तत्तत्साध्याभाववद्व्यक्तिविशेषवृत्तित्वस्य पार्थिवत्वादिविशेषितस्य द्वित्वाद्यवच्छिन्नस्य वा साध्याभाववद्वृत्तित्वस्याभावमादाय नातिप्रसङ्गः ।

---

ध्यान्त च प्रतियोगिताविशेषणम् । प्रथमविशेषणप्रयोजनमाह— तत्तत्साध्याभाववद्व्यक्तिविशेषे ति । यद्व्यक्तौ हेतुरपि न वर्तते तादृशह्रदादिव्यक्तीत्यर्थः । व्यभिचारनिरूपकहेत्वधिकरणमात्रवृत्तिर्यो ऽयोगोलकादिव्यक्तिविशेषावृत्तित्वादिरूपसाध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभावस्तद्व्यक्तिविशेषवृत्तित्वाभावस्य हेतावसम्भवात् किंचिद्विशिष्टस्य तादृशाभाववद्वृत्तित्वस्याभावमादायातिप्रसङ्गं दर्शयति — पार्थिवत्वादिविशेषितस्ये ति अभेदेन साध्यभाववद्वृत्तित्वस्ये त्यनेनान्वितम् । ह्रदघटादौ पार्थिवत्वादिविशेषणाभावात् वह्निशिष्टनिर्धूमवृत्तित्वाभावमादायेत्यर्थः ।

द्वितीयविशेषणप्रयोजनं दर्शयति— द्वित्वाद्यवच्छिन्नस्ये ति । घटनिर्धूमवृत्तित्वोभयत्वावच्छिन्नस्येत्यर्थः । नातिप्रसङ्ग इति । ह्रदादिवृत्तित्वत्वपार्थिवत्वादिविशिष्टनिर्धूमवृत्तित्वत्वावच्छिन्नाभावप्रतियोगितावच्छेदकत्वादिवृत्तिनिर्धूमवृत्तित्वाद्यवृत्तितया तत्तत्साध्याभाववद्वृत्तित्वत्वाव्यापकत्वात् । द्वित्वाद्यवच्छिन्नाभावप्रतियोगितायां द्वित्वादिव्यासज्यवृत्तिताविरहेण निर्धूमवृत्तित्वादिनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपनिर्धूमवृत्तित्वत्वाद्यव्यापकत्वसत्त्वेपि व्यासज्यवृत्तिधर्मावच्छिन्नत्वा तादृशाभावाना लक्षणाघटकत्वादिति भाव । व्यासज्यवृत्तिधर्मस्य तत्तत्साध्याभाववद्वृत्तित्वनिष्ठभेदप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वाविरहात् तत्तत्साध्याभाववद्वृत्तित्वत्वव्यापकधर्मावच्छिन्नाभावकनिवेशे द्वित्वाद्यवच्छिन्नाभावमादायातिप्रसङ्गस्य वारणसम्भवेपि प्रतियोगितायां व्यापकत्वविशेषणप्रवेशे निर्धूमवृत्तित्वत्वादिना

[दी] अत्र च हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वं बोध्यम्, तेन वह्न्यभाववति स्वावयवे धूमस्य वृत्तावपि न क्षतिः. इत्थंच साध्याभावोऽपि

---

हृदादिवृत्तित्वघटान्यतराभावमादाय अतिप्रसङ्गो न शक्यते वारयितुमिति तत्र तद्विशेषणप्रवेशनस्यावश्यकत्वे व्याप्यवृत्तिधर्मावच्छिन्नाभाव वारणाय तादृशधर्मानवच्छिन्नत्वमेव तत्तत्साध्याभाववद्वृत्तित्वव्यापक-धर्मावच्छिन्नत्वापेक्षया लाघवान्निवेशयितुमुचितमिति तदेव निवेशितम्; व्याप्यवृत्तित्वं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम् ।

**साध्याभाववद्वृत्तित्व** मिति । साध्याभाववत्सम्बन्धित्वमित्यर्थः; तेन तादात्म्यसम्बन्धेन वृत्तेरप्रसिद्धावपि न तत्सम्बन्धावच्छिन्नहेतुका व्याप्तिः, सम्बन्धप्रतियोगित्वरूपसम्बन्धित्वैकदेशसम्बन्धे हेतुतावच्छेदक **सम्बन्धेने** ति– तृतीयार्थाभेदान्वय' **वृत्तावपी**ति । सम्बन्धित्वेपीत्यर्थः । **न दोष** इति । हेतुतावच्छेदकसम्बन्धानिवेशे वह्निमान् धूमादित्यत्र वह्न्य-भाववत्संयुक्तत्वस्यत्वावच्छिन्नाभावप्रतियोगितायाः वह्न्यभाववत्समवेतत्वस्य **वृत्तितया** सामान्यतो वह्न्यभाववद्वृत्तित्वं प्रत्यव्यापकत्वेन तादृशाभावस्य लक्षणघटकत्वानुपपत्तेः वह्न्यभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकस्य तद्वृत्तित्वसामान्याभावस्य वह्न्यभाववत्समवेतत्ववति धूमे असत्त्वात् अव्याप्तिः प्रसज्यते; हेतुतावच्छेदकसम्बन्धनिवेशे च निर्वह्निसंयुक्तत्वत्वावच्छिन्नाभावस्यापि तादृशसम्बन्धावच्छिन्नसाध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकत्वेन लक्षणघटकतया तमादाय लक्षणसमन्वय इति भावः । इत्थंच — हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वविवक्षणे च; 'गती' ति शेषः । तदविवक्षणे च वक्ष्यमाणाप्रसिद्धिविरहादुपदर्शितासङ्गतिः ।

[दी] हेतुतावच्छेदकसम्बन्धेन कस्यचिदधिकरणे वर्तमानो ग्राह्यः; तेन जातिमान् सत्त्वादित्यादौ हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वस्याप्रसिद्धावपि न क्षतिः

---

हेतुतावच्छेदकसम्बन्धेन कस्यचिदधिकरण इति । अनुयोगितासम्बन्धेन हेतुतावच्छेदकसम्बन्धवद्वृत्तिरित्यर्थः । अथवा हेतुतावच्छेदकसम्बन्धेन धर्मवद्वृत्तिरित्यर्थः; विशिष्य हेतुतावच्छेदकपुरस्कारेण हेतुमत्त्वनिवेशासम्भवेऽपि बहुपदार्थघटितहेतुतावच्छेदकस्थले धर्मत्वेन निवेशापेक्षया तेन रूपेण निवेशे गौरवमिति सामान्यतो निवेशलाभाय कस्यचिदित्यभिहितम् ।

अथ द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादौ समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यापि साध्याभावस्य सत्तादिरूपहेतुसमानाधिकरणत्वसम्भवेऽपि हेतुतावच्छेदकविशिष्टहेतुसमानाधिकरणनिरुक्तसाध्याभावानां व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वनियमात् तादृशहेतुसमानाधिकरणत्वेनाभावविशेषणे केवलव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वरूपेणैव साजात्यविवक्षणं सम्भवतीति तन्निवेशनमेवोचितमिति चेन्न; तथा सति तादृशयावत्साध्याभावसजातीयवत्त्वस्यैव लक्षणत्वं सम्भवति, व्यभिचारिणि समानाधिकरणधर्मावच्छिन्नाभावस्यापि विशिष्टहेतुसमानाधिकरणत्वेन लक्षणघटकतया तद्घटकयावदभावसजातीयाप्रसिद्धचैव अतिव्याप्तिविरहात् सद्धेतौ तादृशयावदभावसजातीयव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकयत्किञ्चिदभावमादायैव लक्षणसमन्वयसम्भवादिति साध्याभाववद्वृत्तित्वाभाववत्त्वविशेषणवैयर्थ्यापत्तेः । हेतुतावच्छेदकसम्बन्धेनेति । समवायादिसम्बन्धेनेत्यर्थः । साध्याभाववद्वृत्तित्वस्य — समानाधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वस्य । न क्षतिरिति । तादृशसाध्या

[दी] यद्वा यावन्त स्तादृशा स्साध्याभावा प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्य व्याप्यवृत्तेरभावस्य

---

भावस्य समवायादिसम्बन्धानुयोग्यवृत्तितयाऽधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकत्वात् तद्वृत्ति च तादृशसम्बन्धेनापि वृत्ते प्रसिद्धेरिति भाव । अत्र च द्रव्यं गुणकर्मान्यत्वे सति सत्त्वादित्यादावव्याप्ति विशेष्यविशेषणसम्बन्धस्य परम्परया हेतुत्वमभ्युपेत्य वारणीयेत्यभिप्रेत्य हेतुतावच्छेदकसम्बन्धेन किंचिदुक्तयधिकरणवृत्तित्वमभावे विवक्षितम्, यदि च सत्तादेरेव विशिष्टसत्तात्वादिना व्याप्यत्वं हेतुतावच्छेदकविशिष्टनिरूपित हेतुतावच्छेदकसम्बन्धावच्छिन्नाधिकरणतासामान्ये तत्तत्साध्याभावसजातीय तत्तदधिकरणानुयोगिकत्वाभाव तत्तत्साध्याभाववद्वृत्तितासामान्ये तत्तत्साध्याभावसजातीयहेतुतावच्छेदकसम्बन्धावच्छिन्नत्वविशिष्टहेतुतावच्छेदकावच्छेदत्वाभाव वा निवेश्य निवार्यते' तदा जातिमान् सत्त्वादित्यादौ उपदर्शितात्प्रसिद्धिनिबन्धनाव्याप्तेरुक्तविवक्षामन्तरेणैव निवारण सम्भव तीत्यवधेयम् ।

मिश्रास्तु— साध्याभाववद्वृत्तित्वाभावरूपव्याप्तेः "जातिमान् सत्त्वात्" "द्रव्यं विशिष्टसत्त्वा" दित्यादौ अव्याप्तिमालोच्य सकलसाध्याभाववन्निष्ठाभावप्रतियोगित्वरूपमेव व्याप्तिं साजात्यादिघटनया परिष्कुर्वन्त, तत्परिष्कृते च यथाश्रुते वक्ष्यमाणदोषमुद्धर्तुं सभावप्रतियोगित्व स्थले स्वावच्छिन्नव्यापकतावच्छेदकप्रतियोगितावच्छेदकत्वरूपपारिभाषिक तत्प्रतियोगितावच्छेदकत्वाश्रयहेतुतावच्छेदकवत्त्व निवेशयन् तादृश लक्षणमाह— यद्वे ति । तादृशा — व्याप्यवृत्तय, साध्याभावा — साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावा, प्रत्येकं तेषां सजातीयस्य व्यापकीभूतस्याभावस्य— एकैक

[दी]प्रतियोगितावच्छेदकेन धर्मेण यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूपवत्त्वं तत्त्वम्

---

तदभावसजातीयस्य तत्तदभावव्यापकीभूतस्य व्याप्यवृत्तेरभावस्य, प्रतियोगितावच्छेदकेन यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते—प्रतियोगितावच्छेदक यद्धेतुतावच्छेदकावच्छिन्ननिरूपितव्यापकतावच्छेदकम्, तद्रूपवत्त्वं तत्त्वम् — तेन रूपेण व्याप्यत्वम्, वह्निमान् धूमादित्यादौ वह्नित्वाद्यवच्छिन्नवह्न्याद्यभावसजातीयस्तद्व्यापकीभूतो धूमत्वाद्यवच्छिन्नधूमाभाव, वह्नित्वाद्यवच्छिन्नघटाभावसजातीयस्तद्व्यापकीभूत धूमत्वाद्यवच्छिन्नघटाद्यभाव, तत्प्रतियोगितावच्छेदकं धूमत्वादिकं धूमत्वाद्यवच्छिन्नव्यापकतावच्छेदकमिति लक्षणसमन्वय । व्यभिचारिणि धूमत्वाद्यवच्छिन्नव्यापकतावच्छेदकधूमत्वाद्यवच्छिन्नघटाद्यभावतादृशवह्नित्वाद्यवच्छिन्नवह्न्याद्यभावसजातीयतत्तदभावव्यापकवह्नित्वाद्यवच्छिन्नघटाद्यभाववह्नित्वाद्यवच्छिन्नवह्न्याद्यभावप्रतियोगितावच्छेदकत्वादित्यादे वह्नित्वाद्यवच्छिन्नव्यापकतावच्छेदकत्वेऽपि तादृशाभावत्वाद्यभावात् तद्गतधूमत्वाद्यवच्छिन्नधूमाभावसजातीयतद्व्यापकाभावप्रतियोगितावच्छेदकस्य कस्यापि वह्नित्वाद्यवच्छिन्नव्यापकतावच्छेदकत्वाभावान्नातिव्याप्तिः । प्रथमाभावे व्याप्यवृत्तित्वविशेषणात् कपिसंयोगी एतद्वृक्षत्वादित्यादौ कपिसंयोगत्वाद्यवच्छिन्नकपिसंयोगाभावस्य केनापि रूपेण सजातीयस्य व्यापकीभूत व्याप्यवृत्त्यभावस्याप्रसिद्धावपि न क्षति । व्याप्यवृत्तित्वविशिष्टतदभावप्रत्येतद्वृक्षत्वाद्यभावस्य व्यापकत्वात् साध्यतावच्छेदकसम्बन्धेन सा यव्यापकताया निरूपणीयतया संयोगेन उभयस्याव्याप्यवृत्तितामते संयोगेन तन्मात्रके तत्सम्बन्धेन व्यापकताप्रसिद्ध्यर्थं व्यापकताघटकाभाव प्रतियोगिव्यधिकरण्यस्याऽदयनिवेशनीयतया साध्यविशिष्ट

प्रतियोगिसमानाधिकरणाभावप्रतियोगितावच्छेदकस्यापि संयोगत्वादे साध्यव्यापकतावच्छेदकत्वमक्षतमिति ध्येयम् ।

नानाव्यक्तिसाध्यके तत्तत्साध्यव्यक्त्यभावस्य नानाधिकरणकैकव्यक्तिसाध्यके यत्किञ्चिदधिकरणवृत्तित्वविशिष्टसाध्याभावस्य व्यापकीभूताभावो न हेतुतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताक इति तादृशसाध्याभावव्यावर्तनाय साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वानिवेशनम् । व्यापकता च साध्यतावच्छेदकसम्बन्धघटिता, तेन समवायेन द्रव्यत्वादिसाध्यकगुणादिहेतौ विपरीततया साध्यव्यापकज्ञानादे साध्यतावच्छेदकसम्बन्धावच्छिन्नाभाव प्रति हेतुतावच्छेदकसम्बन्धावच्छिन्नहेत्वभावस्याव्यापकत्वेपि न क्षति । साध्याभावश्च साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्य, तेन संयोगादिना वह्न्यादिसाध्यकधूमादिहेतौ समवायादिसम्बन्धावच्छिन्नवह्न्यभाव प्रति संयोगादिना धूमादेरभावस्याव्यापकत्वेपि न क्षति । व्यभिचारिणि समानाधिकरणधर्मावच्छिन्नाभावव्यापकव्यधिकरणहेतुतावच्छेदकावच्छिन्नप्रतियोगिताकाभावमादायातिप्रसङ्गवारणाय सजातीयत्वोपादानम् । व्यतिरेकिसाध्यकस्थले यावत्साध्याभावसजातीयाप्रसिद्धया एकैकतत्सजातीयत्वनिवेशनम् । तादात्म्यघटकतागानाधिकरणधर्मावच्छिन्नप्रतियोगिताकत्वादिकमनुगतनिरुक्तभेदकूटरूपमेव ग्राह्यम्, अन्यथा यत्र भिन्नाभिन्नसम्बन्धेन साध्यहेतुभाव, तत्र साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभावस्य यादृशप्रतियोगितानिरूपकत्व तस्यैव तद्वत्तया सजातीयत्वेन तत्सजातीयाभावनिरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वाप्रसिद्धे सजातीयस्यापि साध्यतावच्छेदकसम्बन्धावच्छिन्नाभावस्य निवेशे हेतुव्यापकतायाः अपि तत्सम्बन्धघटितायां विवक्षणे उक्तासिद्धिनिबन्धनदोषासम्भवेपि व्यापकी

भूतत्वेत्यादे वैयर्थ्यस्य दुर्वारत्वात्, तत्त्यागे च चरमलक्षण एव
पर्यवसानात् । व्यभिचारिणि साध्यतावच्छेदकावच्छिन्नसाध्याभावसजा-
तीयहेतुतावच्छेदकावच्छिन्नहेत्वाद्यभावमादायातिप्रसङ्गस्य वारणाय व्या
पकीभूतस्येति । व्यभिचारिणोऽभावस्य व्यभिचारनिरूपकाधिकरणे
साध्याभावाव्यापकत्वान्न दोषः, व्यापकत्वं च न तत्समानाधिकरणाभाव-
प्रतियोगित्वम्, सर्वस्यैव तादृशाद्वित्वावच्छिन्नाभावप्रतियोगितया ऽसम्भ-
वात् । नच तदधिकरणवृत्तित्वं हेतुतावच्छेदकसम्बन्धेन अवश्यं
वाच्यम्, तथाच वह्न्याद्यभाववति धूमाद्यभावस्य धूमाद्यनात्मकद्वित्वा-
द्यवच्छिन्नाभावस्य संयोगादिरूपहेतुतावच्छेदकसम्बन्धेनावृत्त्या न तमा-
दाय दोषावसर इति वाच्यम्, एवमपि यत्र स्वरूपसम्बन्धेन हेतुता
तत्र तादृशाभावप्रतियोगितया हेत्वभावस्य व्यापकतानुपपत्तेः दुर्वारत्वात्,
नापि तादृशाभावप्रतियोगितानवच्छेदकरूपवत्त्वम्, अभावत्वाद्यात्मक-
तादृशरूपमादायाभावमात्रस्यैव व्यापकतया व्यापकत्वस्याव्यावर्तकतापत्तेः ।
एवं वह्न्याद्यभाववति धूमावयवादौ समवायादिना वर्तमानधूमादिरूप-
मभावमादाय तदभावव्यापकताभङ्गभिया हेतुतावच्छेदकसम्बन्धेन सामा-
नाधिकरण्यस्य निवेशनीयतया सत्तावान् जातेरित्यादौ सत्त्वाद्यभाववति
सामान्यादौ हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्ध्या अव्याप्तिश्चेति तद्व-
न्निष्ठान्योन्याभावप्रतियोगितानवच्छेदकत्वमेव साध्याभावव्यापकत्वम् नि-
र्धूमो वह्निशून्यत्वादित्यादौ हेत्वभावस्य वह्न्यादेः प्रत्येकं धूमादिम-
न्निष्ठभेदप्रतियोगितावच्छेदकत्वेऽपि अखण्डस्य निर्धूमत्वप्रकारकप्रमाविष-
यत्वाद्यभावस्य तादृशाव्यापकतासम्भवात् तत्प्रतियोगितावच्छेदकावच्छि-
न्नस्य हेतुव्यापकतयैव लक्षणसमन्वयः । तद्वन्निष्ठत्वं दैशिकविशेषणतया
ग्राह्यम्, अतो वह्न्याद्यभाववति धूमाद्यभाववद्भेदस्य कालिकादिसम्ब-
न्धेन वृत्तावपि न क्षतिः, अभावाभाववस्य प्रतियोगिरूपत्वाप्यभाववद्भेदो

ऽतिरिक्त एव, अतो धूमाद्यभाववति अयोगोळकादौ दैशिकविशेषणतया वह्न्याद्यभाववद्भेदस्य वृत्तिव्याहतेरेति न वह्न्याद्यभावस्य धूमाद्यभावव्यापकतापत्तिः । अथवा यदीयदैशिकविशेषणतासम्बन्धसामान्ये तत्तत्ताव्याभाववदार्किञ्चिद्वृत्त्यनुयोगिकत्वाभावस्तदन्यत्वमेव तदभावव्यापकत्वम् । अभावद्वेति । भावभिन्नस्येत्यर्थकम्, तेन धूमवान् जलत्वाभावादित्यादौ जलत्वादिनिरूपितदैशिकविशेषणताया अप्रसिध्या तत्र निरुक्तभेदकूटात्मकव्यापकतासत्त्वेपि नातिव्याप्तिः, अभावरूपसद्धेतौ हेतुमत्त्वप्रकारकप्रमाविषयत्वाद्यभावप्रतियोगितावच्छेदकावच्छिन्नव्यापकताभावादव्याप्त्यैव लक्षणसमन्वय धूमवान् वह्नेरित्यादौ अयोगोळकादावप्युत्पत्तिकालावच्छेदेन वर्तमानस्य वह्न्याद्यभावस्य निरुक्तव्यापकतासत्त्वादतिव्याप्तिः, अतो व्याप्यवृत्तेरिति ।

यद्यपि तादृशाभावा अपि ह्रदादौ व्याप्यवृत्तय, तथापि व्याप्यवृत्तित्वविशिष्टस्य व्यापकत्व विवक्षणीयम्, अनवच्छिन्नविशेषणतासम्बन्धेन व्यापकतानिवेशलाभायैव तदुक्तम्, अवच्छिन्नवृत्तिकान्यत्वरूप व्याप्यवृत्तित्वं तु न शक्यते निवेशयितुम्, संयोगेन सद्धेतौ हेतुतावच्छेदकसम्बन्धावच्छिन्नहेत्वभावस्याप्रसिद्ध्यात् । तत्प्रतियोगितेत्यत्र प्रतियोगिता हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या, अन्यथा व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकहेत्वभावस्य साध्याभावव्यापकस्य समनियताभावैक्यमते व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावरूपतया सामानाधिकरणधर्मावच्छिन्नसाध्याभावसजातीयत्वेन तमादायासिद्ध्याप्ति विरहेपि आत्मत्वादिसाध्यके विषयतया हेतौ ज्ञानादौ साध्याभावव्यापकसमवायसम्बन्धावच्छिन्नज्ञानाद्यभावमादायातिव्याप्ते, अभावे हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वविशेषण प्रवेश्य च नातिप्रसङ्गवारणसम्भव . समनियताभावैक्ये समवायसम्बन्धावच्छिन्नज्ञानाद्यभाव

[दी] साधनस्य तादृशव्यापकाभावप्रतियोगिनि तदवच्छेदकत्वं वा, साधनतावच्छेदकत्वस्यापि तु न वाच्यम्, द्रव्यं सत्त्वादित्यादौ स-त्त्वादे तादृशाभावव्यापकगुणकर्मान्यत्वविशिष्टसत्ताभाववच्छिन्नप्रति

---

त्वादि स्वसमवायादिविषयकत्वसम्बन्धेन ज्ञानादिविशिष्टज्ञानादे विषयिता-सम्बन्धावच्छिन्नाभावप्रतियोगित्वेन तादृशसम्बन्धावच्छिन्नप्रतियोगिताक-त्वात्, धूमाद्यभावव्यापकमहानसीयवह्न्यभावप्रतियोगिनो वह्नित्वादिना वह्नित्वावच्छिन्नव्यापकत्वादतिप्रसङ्ग इति प्रतियोगिनो व्यापकताघटक-प्रतियोगितावच्छेदकस्य तदवच्छेदकत्वपर्यन्तानुधावनम्। द्रव्यं विशिष्ट-सत्त्वादित्यादौ साध्याभावव्यापकाभावप्रतियोगितावच्छेदकविशिष्टसत्तादे-र्हेतुतावच्छेदकोपलक्षितहेतुव्यापकत्वासम्भवात् 'य प्रती'' त्यनुपपत्ता पर्याप्त्यवच्छिन्नत्वमुक्तम्. व्यापकता च हेतुतावच्छेदकसम्बन्धेन ग्राह्या, अतो महाकालभिन्नं कालत्वादित्यादौ साध्याभावव्यापकाभाव-प्रतियोगितावच्छेदकस्य साध्यतावच्छेदकादे कालिकादिसम्बन्धेन हेतु-व्यापकतावच्छेदकत्वेऽपि नातिप्रसङ्ग, व्यापकतावच्छेदकताघटक-सम्बन्धभेदनिवेशनादिकं स्वयमूह्यम् ।

न च धूमवान् वह्निमत्त्वप्रकारकप्रमाविषयत्वादित्यादौ धूमाद्य-भावव्यापकधूमाद्यभावस्य प्रतियोगितावच्छेदकजलादिवृत्तित्वविशिष्टधूमा-भावाभावत्वादे हेतुतावच्छेदक स्वरूपसम्बन्धघटितहेतुव्यापकतावच्छेद-कत्वादिति वाच्यम्, भाववृत्तिप्रतियोगितावच्छेदकस्य व्यापकतावच्छे-दकतया विवक्षणीयत्वात् ।

यथाश्रुतामिश्रलक्षणमुपन्यस्य दूषयति— साधनस्येति। तादृशेति। ये ये साध्याभावा प्रसिद्धा तत्तत्सजातीयतद्व्यापकेत्यर्थ । तदवच्छे-दकत्वम्—तादृशप्रतियोगितावच्छेदकत्वम्। आद्ये- द्रव्यं सत्त्वादिति ।

[दी] योगिताकाभावप्रतियोगित्वादित्यादौ, ज्ञेय प्रमेयादित्यादौ प्रमेयत्वादेः स्वादृशप्रतियोगितानवच्छेदकत्वात् अव्याप्तेश्च, प्रमेयत्वव्यधिकरणप्रतियोगित्वाप्रसिद्धेः ।

---

द्वितीये – ज्ञेय प्रमेयादित्यादाविति । ननु प्रमेयत्वादेः केवलान्वयितावच्छेदकत्वेऽपि वाच्यत्वत्वादेरिव साध्याभावव्यापकव्यधिकरणधर्मावच्छिन्नाभावप्रतियोगितावच्छेदकत्वमक्षतमेवेत्याशङ्कां निरस्यति– प्रमेयत्वव्यधिकरणे ति । प्रमेयत्वस्य केवलान्वयित्वादिति भावः धूमाद्यभावं प्रति विषयितादिसम्बन्धेन वह्नित्वाद्यवच्छिन्नस्य यो ऽभाव स्तस्य व्यापकत्वात् समादाय समवायेनात्मत्वे साध्ये समवायेन द्रव्यत्वे हेतौ आत्मत्वाभावं प्रति विषयितासम्बन्धेन द्रव्यत्वत्ववज्ज्ञानस्य च स्वसमवायसम्बन्धावच्छिन्नप्रतियोगिताकोऽभाव स्तस्य व्यापकत्वात् तमादायातिप्रसङ्गस्य वारणाय च प्रतियोगितावच्छेदकतायां हेतुतावच्छेदकताघटकसम्बन्धावच्छिन्नत्वस्यावश्य निवेशनीयतया व्यधिकरणसमवायादिसम्बन्धेन प्रमेयत्वस्य अभावप्रतियोगितायामसमानाधिकरणतयाऽवच्छेदकत्वसम्भवेऽपि न निस्तार इत्यवधेयम् । अन्योन्याभाव एव व्यधिकरणधर्मावच्छिन्नावच्छेदकताको नत्वत्यन्ताभाव इत्याशयेनेदम्, अन्यथा घटत्वावच्छिन्नप्रमेयत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावमादाय लक्षणगमनसम्भवात् । एतदुपलक्षणम्, गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे कम्बुग्रीवादिमत्त्वाद्यवच्छिन्नहेतुकाव्याप्तिरपि द्रष्टव्या । एतेन व्यापकीभूताभावप्रतियोगितायां हेतुतावच्छेदकानवच्छिन्नत्वव्यधिकरणधर्मानवच्छिन्नत्वोभयाभावविवक्षणे प्रमेयहेतुकस्थले वाच्यत्वत्वादिना घटाद्यभावप्रतियोगितायां तादृशोभयाभावसत्त्वेन लक्षणसमन्वयेऽपि न निस्तारः उक्तस्थले हेतुतावच्छेदकावच्छिन्नत्वाप्रसिद्ध्या अप्रतीकारात् ।

[दी] यद्वा यावन्तस्तादृशाः साध्याभावाः प्रत्येकं तत्प्रतियोगितावच्छेदकेन यद्रूपावच्छिन्नं प्रति व्यापकत्वमवच्छिद्यते तद्रूप-

---

उक्तलक्षणे सजातीयादिपदपरित्यागेन लघुलक्षणमाह — यद्वेति। व्यभिचारिणि व्यधिकरणधर्मावच्छिन्नाभावादिकमादायातिव्याप्तेर्वारणाय यावन्त इति। वह्निमान् धूमादित्यादौ महानसीयवह्नित्वावच्छिन्नाभावप्रतियोगितावच्छेदकस्य धूमत्वावच्छिन्नव्यापकतानवच्छेदकतया अव्याप्तिरिति तादृशा इति। साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताका इत्यर्थः। अत्र व्याप्यवृत्तित्वविशेषणं प्रयोजनाभावादनुपादेयम्। साध्याभावसजातीयत्वादिविशेषणावच्छिन्नव्याप्यभावान्तरस्य प्रकारान्तरेण तादृशपदे तत्परत्वभ्रमस्य स्यादिति निरासाय अभावा इत्येतन्मात्रमनभिधाय साध्याभावा इत्युक्तम्। यावत्साध्याभावनिरूपिता न काचिदपि प्रतियोगितेति प्रत्येकं पदम्। अत्र च व्यभिचारिणि सत्यपि यत्किञ्चित्सम्बन्धेन साध्यतावच्छेदकावच्छिन्नस्य व्यापकतयाऽतिप्रसङ्गस्य वारणाय प्रतियोगितावच्छेदकसम्बन्धेनैव व्यापकता निवेशनीया, इत्थञ्च समवायसम्बन्धावच्छिन्नवह्न्यभावप्रतियोगितावच्छेदकसमवायादिसम्बन्धेन वह्नित्वावच्छिन्नस्य धूमाव्यापकत्वादसम्भव इति प्रतियोगितावच्छेदकसम्बन्धेनैव साध्यव्यापकता विवक्षणीया, तथाच केवलान्वयिसाध्यकस्थले व्यधिकरणसम्बन्धावच्छिन्नसाध्याभावमादाय निर्वाहो न भवतीति व्यधिकरणधर्मावच्छिन्नाभावस्योपयोगिता बोध्या, धूमवान् वह्नेरित्यादौ धूमाभावप्रतियोगितावच्छेदकतत्तादि वृत्तित्वविशिष्टधूमाद्यभावाभावत्वेन वह्न्यादिव्यापकत्वेपि नातिव्याप्तिः, साध्यतावच्छेदकावच्छिन्ननिरूपितसम्बन्धावच्छेदकसम्बन्धघटितव्यापकतावच्छेदकावच्छिन्ना यावत्य प्रतियोगिता प्रत्येकं तदवच्छेदकरूपेण तद

[दी] वत्त्वं तत्त्वमित्याहुः। परे तु वृत्तिमद्वृत्तयो यावन्तस्साध्याभाव-

वच्छेदकसम्बन्धेन यद्रूपावच्छिन्नं प्रति व्यापकत्वमित्येतादृशार्थस्यैव विव क्षणीयत्वा साध्यव्यापकतावच्छेदकं यद्रूपं तेन व्यापकत्वविवक्षणे व्यधिकरणधर्मावच्छिन्नाभावोपयोगिता न घटत इति साध्यव्यापकता वच्छेदकावच्छिन्नप्रतियोगितावच्छेदकत्वेन व्यापकत्वावच्छेदकनिवेशः। यथासन्निवेशे न वैयर्थ्यम्. प्रतियोगितायाः स्वरूपसम्बन्धरूपत्वे वह्नि-त्वाद्यवच्छिन्नप्रतियोगिताया वह्न्यादिव्यक्तिभेदेन भिन्नाया धूमत्वाद्य-वच्छिन्नव्यापकतावच्छेदकत्वं न सम्भवतीति व्यापकतावच्छेदकावच्छिन्न प्रतियोगितायां व्यापकतावच्छेदकत्वं न निवेशितम् ॥

इति मिश्रलक्षणम्।

॥अथ कूटघटितलक्षणम्॥

कूटघटितलक्षणे व्यभिचारिणि साध्याभाववद्वृत्तित्वत्वव्यापकप्रति योगिताको न निर्धूमवृत्तित्वत्वाद्यवच्छिन्नाभावः, अपि तु जगद्वृत्तित्व सामान्याभाव एव, तत्र व्यधिकरणधर्मावच्छिन्नप्रतियोगिताक एव वृत्तिमद्वृ त्तिरित्यतिव्याप्तिवारणाय कूटपदमुपात्तम्. तादृशातिव्याप्तिः समानाधि करणव्यधिकरणधर्मावच्छिन्नाभावसाधारणरूपेण साध्याभावस्य व्याप्यता-वच्छेदककोटौ प्रवेशन एव प्रसज्यते, न तु विशिष्य साध्याभाव निवेशे, तथा सति निर्धूमवृत्तित्वत्वावच्छिन्नाभावस्यापि लक्षणघटकता निर्वाहादिति कूटपदमनुपादाय विशिष्य साध्याभावं निवेश्यैव लक्षण मुचितम्, तदुपादाने बहूनां दोषाणां वक्ष्यमाणत्वादिति कूटघटित लक्षणघादिनमाक्षेप्तुं कूटाघटितं लक्षणं दर्शयति— परेत्वि त्यादिना। साध्याभाववद्वृत्तित्वस्य व्यधिकरणधर्मावच्छिन्नाभावमादाय व्यभिचारि मात्रे अतिव्याप्तिः, अतो यावन्त इति। तथा सति समानाधिकरण

[दी] वद्वृत्तित्वाभावाः तद्वत्त्वं व्याप्तिः. येन सम्बन्धेन हेतुता तेनैव सम्बन्धेन वृत्तिमत्त्वं बोध्यम् , तेन व्यधिकरणधर्मावच्छिन्नाभाववति संयोगेन या वृत्तिस्तदभावस्य जात्यादौ वर्तमानस्य

---

धर्मावच्छिन्नसाध्याभाववद्वृत्तित्वस्य समानाधिकरणधर्मावच्छिन्नाभावस्य यावत्तादृशाभावान्तर्गतस्य व्यभिचारिण्यसत्त्वान्नातिव्याप्तिः। वृत्तिमद्वृत्तित्वानुपादाने समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्संयुक्तत्वाद्यभावस्य असंयुक्ताकाशादौ प्रसिद्धस्य हेतावसत्त्वात्संयोगादिसम्बन्धेन हेतावव्याप्तिः; यादृशसम्बन्धप्रतियोगित्वं वस्तुमात्र एव, तादात्म्यविषयतादिरूपतादृशसम्बन्धेन हेतावेव परं लक्षणसमन्वयो भवति, तादृशसम्बन्धेन जगत्संबद्धत्वस्य समानाधिकरणधर्मावच्छिन्नाभावस्याप्रसिद्धेरिति तदुपादानम् ।

ननु वृत्तिमद्वृत्तित्वोपादानेऽपि जगत्संयुक्तत्वत्वाद्यवच्छिन्नाभावस्य जात्यादिरूपवृत्तिमति वर्तमानस्य वारणासम्भवात् वह्निमान् धूमादित्यादौ अव्याप्तिर्दुर्वारैव, निर्धूमसंयुक्तत्वाद्यभावस्य निर्धूमवृत्तित्वत्वाव्यापकप्रतियोगिताकतया वृत्तिमन्मात्रस्यैव निर्धूमकालादिवृत्तित्वेन च निर्धूमवृत्तित्वसामान्याभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव वृत्तिमद्वृत्तित्वेन धूमवान् वह्नेरित्यादावतिव्याप्तेर्वारणाय हेतुतावच्छेदकसम्बन्धेन साध्याभाववद्वृत्तित्वस्यैव निवेशनीयतया संयोगादिना यत्र हेतुत्वं तत्र जगत्संयुक्तत्वत्वाद्यवच्छिन्नाभावस्यापि हेतुतावच्छेदकसम्बन्धावच्छिन्नसाध्याभाववद्वृत्तित्वत्वव्यापकप्रतियोगिताकत्वेन लक्षणघटकत्वाद्वृत्तिमत्पदस्य यथाश्रुतार्थकत्वे कालिकसम्बन्धेन गगनादेरवृत्तित्वमते तेन सम्बन्धेन यत्र हेतुता तत्रैव परं मव्याप्तिवारकता, तेन सम्बन्धेन जगद्वृत्तित्वाभावस्य अवृत्तिमात्रे प्रसिद्धत्वादित्यत आह — **येन सम्बन्धेने** ति ।

[दी] धूमत्वादावसत्त्वेऽपि न क्षतिः . साध्याभावश्च पूर्ववद्बोध्यः .

---

न क्षतिरिति। नाव्याप्तिरित्यर्थः। न तु नासम्भव इति, तादात्म्यकालिकादिसम्बन्धेन हेतौ लक्षणसमन्वयसम्भवादिति।

ननु नानाव्यक्तिसाध्यके तत्तत्साध्यव्यक्त्यभाववद्वृत्तित्वाभावस्य हेतावसत्त्वादव्याप्तिः, कूटघटितलक्षण इवात्रापि साध्यतावच्छेदकसमनियतप्रतियोगिताकाभावनिवेशेऽपि तार्णातार्णवह्न्युभयत्वावच्छिन्नाभावमादाय वह्न्यादिसाध्यके गुणादिवृत्तित्वविशिष्टसत्ताद्यभावमादाय च सत्तादिसाध्यके अव्याप्तिर्दुर्वारैव, एवमव्याप्यवृत्तिकपिसंयोगादिसाध्यके हेत्वधिकरणस्यैव जगत एव कपिसंयोगत्वाद्यवच्छिन्नाभाववत्तया तद्वद्वृत्तित्वस्याव्यापकप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव वृत्तिमद्वृत्तित्वेनाव्याप्तिविरहेऽपि तादृशकपिसंयोगाभावादिसाध्यकद्रव्यत्वादिहेतौ कपिसंयोगादिरूपसाध्याभाववद्वृत्तित्वाभावासत्त्वादव्याप्तिरित्यत आह — साध्याभावश्चेति। पूर्ववदिति। मिश्रलक्षणे यथा साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताको व्याप्यवृत्तिरभावो निवेश्यते, तथात्रापि निवेशनीय इत्यर्थः। तदुक्तहिस्वकथितोभयत्वावच्छिन्नप्रतियोगिताकाभावानां प्रथमविशेषणेन कपिसंयोगादिरूपाभावानां च द्वितीयविशेषणेन व्यावृत्तिः। ननु साध्याभाववद्वृत्तित्वप्रतियोगिकाभावमात्रनिवेशे प्रकृतहेतुसाधारणस्य व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वाविशेषस्य समानाधिकरणधर्मावच्छिन्नाभावोऽपि वृत्तिमद्वृत्तित्वसम्भवतीति यावत्तादृशाभावान्तर्गततद्वृत्त्वस्य हेतावभावादसम्भवः; एवं समानाधिकरणधर्मावच्छिन्नाभाववद्वृत्तित्वस्य प्रकृतहेतुवृत्तितावच्छेदकीभूतकिञ्चिद्धर्मावच्छिन्नस्याभावोऽपि यावत्तादृशाभावान्तर्गत इति तद्वत्त्वविरहादपि व्यतिरेकिसाध्यकहेतूनां अव्यभिचारित्वानुपपत्तिः; तत्तत्साध्या-

[दी]नद्वद्वृत्तित्वाभावोऽपि स्वव्यापकतत्तत्साध्याभाववद्वृत्तित्वत्वव्यापक प्रतियोगिताक

---

भाववद्वृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावश्च विवक्षितुमशक्य. केवलान्वयिनि साध्याभाववद्वृत्तित्वत्वेन घटाद्यभावस्य तादृशगुरुधर्मस्य प्रतियोगितावच्छेदकत्वमते प्रसिद्धावपि तस्याऽतथात्वमते व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वस्य स्वघटककेवलवृत्तित्वत्वसमनियतता प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नाभावाप्रसिद्धेर्दुर्वारत्वात्, तत्तदभाववद्वृत्तित्वघटकधर्मावच्छिन्नाभावनिवेशे च वह्नित्वाद्यवच्छिन्नवह्न्याद्यभावव्यक्ते स्तत्तदभावत्वावच्छिन्नाभावस्यापि तादृशतया तस्य च धूमादावसत्त्वादव्याप्ति, साध्याभाववद्वृत्तित्ववृत्तितादृशधर्मावच्छिन्नाभावनिवेशेऽपि घटवृत्तित्वत्वाद्यवच्छिन्नसाध्यके तादात्म्येन घटत्वव्यापकादिहेतौ तादृशसाध्याभाववत्त्वे घटत्वाभावादि तन्निष्ठवृत्तितानिष्ठतादृशसाध्याभावस्वरूपतथाविधधर्मावच्छिन्नाभावस्य घटादिमात्रवृत्ते हेतावसत्त्वादव्याप्तिर्दुर्वारैव, साध्याभावादिव्यापकत्वघटकतानिवेशे च प्रयासगौरवमिति तत्तत्साध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकाभावं विवक्षयति– तद्वदिति । स्व प्रतियोगिता, अत्र साध्याभावस्य साध्याभावत्वेन सामान्यतो निवेशे व्यभिचारिणि निर्धूमवृत्तित्वत्वावच्छिन्नाभावप्रतियोगिताया व्यधिकरणधर्मावच्छिन्नसाध्याभाववत्सामान्याधिकरणवृत्तित्वसाधारणसाध्याभाववद्वृत्तित्वत्वाव्यापकत्वेन तादृशाभावस्य लक्षणाघटकतया वृत्तित्वसामान्याभावस्य तथाविधप्रतियोगिताकस्य च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव वृत्तिमद्वृत्तितया अतिव्याप्तिरिति तत्तद्व्यक्तित्वेनाभावस्य व्याप्यतावच्छेदककोटिनिवेशनलाभाय तत्तदिति ।

यद्यपि यत्किञ्चित्साध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकवृत्तिमद्वृत्तियावदभावत्त्व व्यभिचारिसाधारणम्, यादृश स्साध्याभावा

प्रत्येकं तत्तदधिकरणवृत्तित्वत्वसमनियतैकप्रतियोगितायाः नानाविपक्षके अप्रसिद्धिः, तत्तद्विपक्षावृत्तित्वावच्छिन्नाभाववत्तत्तद्विपक्षवृत्तित्वत्वव्याप्यैकप्रतियोगित्वाप्रसिद्धेः; तथापि यावतामभावानां प्रत्येकाधिकरणवृत्तित्वत्वसमनैयत्यस्य प्रत्येकं प्रतियोगितान्वयेन एतदभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकश्च योऽभावः तद्वत्त्वमित्येवं रीत्या निवेशान्नानुपपत्तिः । एतल्लक्षणे साध्याभावसमुदायो न समुदायत्वेन प्रविष्टः, अपि तु प्रातिस्विकरूपेणेति कूटघटिताद्विशेषः ।

अथात्र स्वपदं न तत्तदभावीयप्रतियोगितात्वरूपेण प्रतियोगितापरम्, साध्याभाववद्वृत्तित्वातिरिक्तेऽपि तदभावीयप्रतियोगितान्तरसत्त्वादिति तत्तत्प्रतियोगिताव्यक्तिपरं तद्वाच्यम्, तथाच यत्किंचित्प्रतियोगितानिरूपकाशेषाभावस्यातिव्यापकतया यावत्यस्तादृश्यः प्रतियोगिताः प्रत्येकं तन्निरूपकाभाववत्त्वं निवेशनीयम्; तथाच समानाधिकरणधर्मावच्छिन्नजगद्वृत्तिसामान्याभावप्रतियोगितानिरूपकवृत्तिमद्वृत्त्यभावाप्रसिद्ध्या अव्याप्तिरिति वृत्तिमद्वृत्त्यभावीयत्वेन यावत्प्रतियोगिता निवेशनीया; तथाच तन्निरूपकाभावे वृत्तिमद्वृत्तित्वविशेषणं व्यर्थम्; यावत्त्वविशेषणमपि तथेति चेत्? नोपादीयत एव तत्र तद्विशेषणम्, वृत्तिमद्वृत्त्यभावीययावत्प्रतियोगितानिवेशलाभायैव प्रतियोगिताविशेष्यीभूताभावे वृत्तिमद्वृत्तित्वयावत्त्वाभिधानात्; अत्र च गुरुधर्मस्य अभावप्रतियोगितानवच्छेदकत्वे स्वव्यापकतदभाववद्वृत्तित्वत्वयन्निष्ठभेदप्रतियोगितावच्छेदकत्वस्याव्यावर्तकव्यापकतान्तर्घटितत्वेन अभावप्रतियोगितानवच्छेदकतया तदवच्छिन्नान्योन्याभावरूपव्यापकत्वपुरस्कारेण न प्रतियोगितानिवेश स्तम्भनतीति . तादृशावच्छेदकभेदकूटात्मकव्यापकत्वपुर-

[दी] तत्तत्साध्याभाववद्वृत्तित्वत्वातिरिक्तेनं

---

प्रकारेणैव तन्निवेशः, न च स्वव्यापकतदभाववद्वृत्तित्वत्वकत्वतदभाववद्वृत्तित्वत्वनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वावच्छिन्नैकभेदोभयरूपेण प्रतियोगितानिवेशसम्भवात् अवच्छेदकभेदकूटनिवेशनमफलमिति वाच्यम्; घटभेदादिसाध्यकस्थले तदभावव्यक्तित्वेन घटत्वादिघटितस्य तदभाववद्वृत्तित्वनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वस्य स्वरूपतो घटत्वादिघटितघटवृत्तित्वनिष्ठान्योन्याभाव प्रतियोगितावच्छेदकत्वमपेक्ष्य गुरुशरीरतया प्रतियोगितानवच्छेदकत्वेन तदवच्छिन्नैकभेदनिवेशासम्भवात्। अत्र कल्पे व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वसमनियतप्रतियोगिताकस्य पर्वतवृत्तित्वपर्वतान्यवृत्तित्वोभयत्वावच्छिन्नाभावस्य पर्वतान्यवृत्तिवृत्तिमद्वृत्तिधूमादावभावादेकमात्रवृत्तिहेतावपि तादृशप्रतियोगिताकस्य एतत्क्षणावच्छिन्नवृत्तित्वैतदन्यक्षणावच्छिन्नवृत्तित्वोभयत्वावच्छिन्नाभावस्यैतत्क्षणावृत्तौ वृत्तिमति वर्तमानस्याभावादसम्भव; तादृशाभावव्यावर्तनाय व्याप्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वनिवेशगौरवम्, पर्वतवृत्तित्वत्वादिना अगवृत्तित्वसामान्याभावस्य व्यावृत्त्यसम्भवश्चेत्यत कल्पान्तरमनुसरति - तत्तत्साध्याभावेति। अतिरिक्तानिवेशे व्यधिकरणधर्मावच्छिन्नाभावमात्रस्य समव्याप्यभिचारिमात्रे अतिव्याप्तिरिति तन्निवेशितम्। यद्यपि यथाश्रुतेनानेन महानसवृत्तित्वत्वादिना व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वाभाववारणं न सम्भवति, महानसादिनिरूपितत्वविशिष्टवृत्तित्वत्वस्य साध्याभाववदधिकरणनिरूपितत्वविशिष्टवृत्तित्वत्वान्यत्वविरहात्; तथापि साध्याभाववद्वृत्तित्वव्याप्तिनिरूपितसमानाधिकरणधर्मानिरूपितावच्छेद स्वरूपसम्बन्धानवच्छिन्नत्वेन विवक्षणान्न दोषः, महानसवृत्तित्वत्वादि निर्णीतावच्छेदकस्य साध्याभाववद्वृत्तित्वस्वरूपानिरूपितत्वपदार्थानिरूपित-

त्वात् । नचैवमपि साध्याभाववन्महानसवृत्तित्वत्वावच्छिन्नाभाववारणमशक्यम्, तादृशधर्मनिरूपितानवच्छेद्यतायां तद्घटकसाध्याभाववद्वृत्तित्वत्वनिरूपितत्वस्य "अधिकंत्वि" त्यादिन्यायेन अन्याहतत्वादिति वाच्यम्, गुरुधर्मस्याभावप्रतियोगितानवच्छेदकतया महानसवृत्तित्वत्वसमनियतोपदर्शितगुरुधर्मस्य अभावप्रतियोगितानवच्छेदकत्वात् ।

अथ गुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वे साध्याभावपदस्य साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभावपरतया धूमवान् वह्नेरित्यादावतिव्याप्तिः, धूमत्वाद्यवच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभाववद्वृत्तित्वत्वस्य समनियतधूमत्वावच्छिन्नाभाववद्वृत्तित्वत्वापेक्षया गुरुत्वेन अभावप्रतियोगितावच्छेदकत्वविरहेण तदवच्छिन्नाभावाप्रसिद्धेः, धूमत्वाद्यवच्छिन्नाभाववद्वृत्तित्वत्वावच्छिन्नप्रतियोगितायाश्च धूमत्वाद्यवच्छिन्नव्यापकतावच्छेदकावच्छिन्नाभाववद्वृत्तित्वत्वरूपविशिष्टपदार्थानवच्छिन्नतया तन्निरूपकाभावस्य निरुक्ताभावविशेषणानाक्रान्तत्वेन व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य साध्याभाववद्वृत्तित्वाभावस्यैव लक्षणघटकत्वात् । यदि च साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावस्य तेन रूपेण न निवेशः, अपि तु तत्तदभावत्वेनैव, एतदेव सूचयितुं तत्तत्पदमुपात्तम्; एवञ्च तत्तद्व्यक्तित्वेन धूमाभावघटिततदभाववद्वृत्तित्वत्वावच्छिन्नाभावस्य लक्षणघटकतया न धूमादिसाध्यके अतिव्याप्तिरित्युच्यते ?, तदापि घटभिन्नं मेयत्वादित्यादावतिव्याप्तिः, तत्र तद्व्यक्तित्वेन रूपेण घटभेदाभावघटिततद्व्यक्तिमद्वृत्तित्वत्वापेक्षया रूपयोस्तत्समनियतस्य किंचिद्विशेषणानवच्छिन्नघटत्वघटितघटवृत्तित्वत्वस्यैव अभावप्रतियोगितावच्छेदकतया तद्व्यक्तिमद्वृत्तित्वत्वावच्छिन्नाभावाप्रसिद्धेः, घटवृत्तित्वत्वावच्छिन्नप्रतियोगितायाः

साध्याभाववद्वृत्तित्वत्वरूपविशिष्टपदार्थानवच्छिन्नतया तन्निरूपकाभावस्य लक्षणघटकत्वासम्भवाद्व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वत्वावच्छिन्नाभावस्यैव तथात्वात्, यदि च अभावधर्मो विशेषणविधया न निवेश्यते, अपि तु अभावधर्मिरेव, अभावे तु साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकत्वमुपलक्षणविधया निवेश्यते, एतल्लाभायैव तत्तत्पदोपादानमपि, न तु तत्तद्व्यक्तित्वेनाभावनिवेशलाभार्थम्, उपलक्षणीभूतप्रतियोगिताविशेषणनैवाभावान्तरव्यावृत्तिसम्भवे तत्तद्व्यक्तित्वस्योपलक्षणतया निवेशे प्रयोजनविरहात्, एवञ्च घटवृत्तित्वत्वावच्छिन्नाभावो प्युक्तस्थले लक्षणघटकः, घटभेदाभावस्य घटत्वस्य तत्प्रतियोगितावच्छेदकघटत्वात् प्रतियोगिताविशेषोपलक्षिताभाववद्वृत्तित्वत्वपर्याप्तनिरूपकताका-यत्वपर्यन्तानिवेशात् धूमादिसाध्यकस्थले निर्धूमवृत्तित्वत्वावच्छिन्नाभावस्य प्रतियोगितावच्छेदकशरीरे अभावविशेषणस्य अधिकस्य निवेशेऽपि न क्षतिः । न चाभावप्रतियोगिकोटौ उपलक्षणतया भानस्य अनुभवविरुद्धत्वात् विशिष्टनिरूपितत्वाभावरूपस्य निरूपितत्वसम्बन्धावच्छिन्नविशिष्टाभावरूपस्य वा विशिष्टनिरूपितत्वस्य प्रतियोगिकोटौ प्रतियोगिताविशेषस्य कथमुपलक्षणविधया निवेश इति वाच्यम्, प्रतियोगितावच्छेदकज्ञान एव तादृशभानस्य तथात्वात्, जात्यवच्छिन्नप्रतियोगिताकोऽभाव इत्याद्याकारस्य स्वरूपतो घटत्वावच्छिन्नप्रतियोगिताकाभावभानस्य सर्वसम्मतत्वात्, प्रकृते च साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताको यो ऽभाव तद्वद्वृत्तित्वत्वनिरूपितत्वप्रतियोगिकाभाववत् समानाधिकरणधर्मावच्छेदस्य यो ऽभाव तद्वत्प्रतियोगिताका यावन्तो ऽभावा स्तद्वान् हेतुरित्यत्र यत्तिस्रो प्रतियोगिताया विशेषणत्वेन अनुपपत्त्यभावात्, अत एव व्यापकतावच्छेदकत्वादेरप्युपलक्षणविधया भानोपपत्तिः । न च

तादृशनिरूपितत्वप्रतियोगिकस्य तत्त्वावच्छिन्नप्रतियोगिताकस्य वा ऽभावस्य निवेशे निर्धूमवृत्तित्वत्वाद्यवच्छिन्नाभावप्रतियोगितानिष्ठावच्छेदकतायामपि किञ्चिद्विशिष्टतादृशनिरूपितत्वत्वावच्छिन्नाभावसत्त्वात्तादृशाभावासङ्ग्रह इति वाच्यम्; तत्तदभाववद्वृत्तित्वत्वनिरूपितत्वपर्याप्तप्रतियोगितावच्छेदकताकाभावस्यैव निवेशनीयत्वात्; *( एवञ्च तत्तद्व्यक्तित्वेन अभावनिवेशगौरव्येण तत्तत्पदोपादानमपि साधु सङ्गच्छते– इत्युच्यते?, ) तदापि घटत्वभेदादिसाध्यके व्यभिचारिण्यतिव्याप्तिवारणमशक्यम्, निर्विशेषणकघटत्वादिवृत्तित्वत्वस्यैव तत्र घटत्वादिवृत्तित्वाभावं प्रति प्रतियोगितावच्छेदकतया घटत्वत्वादिरूपसाध्याभावस्य प्रतियोगितावच्छेदकशरीरे अनिवेशेन व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकत्वात् । नच जातेः समवायेनैव स्वरूपतो ऽवच्छेदकत्वम्, न तु सम्बन्धान्तरेण; अत एव गोत्वादिजातिनिष्ठव्याप्तौ पदविशेषप्रवृत्तिनिमित्तत्वगवेतरासमवेतत्वादेरवच्छेदकत्वं स्वीकुर्वन्ति, न तु तादात्म्यसम्बन्धेन लघोरपि गोत्वादिजातेरिति निर्विशेषणघटत्वादिघटितस्याभावप्रतियोगितावच्छेदकत्वं न सम्भवतीति वाच्यम्, तादृशनियमे मानाभावात्; यदि चाभावांशस्यापि उपलक्षणत्वं स्वीक्रियते? तदा महानसवृत्तित्वत्वाद्यवच्छिन्नाभाववारणमशक्यमेव; यदि च साध्याभावातिरिक्तविशेषणाविशेषिताधिकरणवृत्तित्वत्वाद्यवच्छेद्यताभिन्नसमानाधिकरणधर्मावच्छेद्यत्वाभावं निवेश्याविशेषितघटत्वादिवृत्तित्वाभावः सगृह्यते?, तदा तादृशाभावमादाय जातिसाधारणसद्धेतावव्याप्तिर्वज्रलेपायते । एवं साध्याभाववद्वृत्तित्वशरीरे अभावादे विशेषणतया प्रवेशे वृत्तिमद्वृत्तिपदमनर्थकमापद्यते, व्यधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वस्य यः समानाधिकरणधर्मावच्छिन्नाभाव स्तत्प्रतियोगितायाः लाघवेन वृत्तित्वत्वेनावच्छिन्नतया तदवच्छेद्यताया अभावघटितविशिष्टपदार्थानिरूपितत्वात् ।

---

* कुण्डलितग्रन्थो ऽनावश्यक इव ।

अत्र वदन्ति, — गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वमतेनेदमभिहितम्, व्यधिकरणधर्मावच्छिन्नसाध्याभाववन्महानसवृत्तित्वाद्यवच्छिन्नाभाववारणाय च साध्याभाववद्वृत्तित्वधर्मावच्छेदकताभिन्नसमानाधिकरणधर्मनिष्ठावच्छेदकतानिरूपकत्वमेव प्रतियोगितायां विशेषणं देयम्, नचैव घटत्वादिना साध्याभाववद्वृत्तित्वाभावसङ्ग्रहफलक समानाधिकरणपदोपादानं निषेधद्वयनिवेशनं च विफलम्, तादृशाभावस्यासङ्ग्रहेऽपि केवलान्वयिनि साध्याभाववद्वृत्तित्वत्वेन घटाद्यभावमादाय लक्षणसमन्वयसम्भवादिति वाच्यम्, विषयितादिसम्बन्धेन यत्र हेतुता तत्र हेतुतावच्छेदकसम्बन्धेन साध्याभाववति वृत्ते स्साध्याभाववद्विषयतादिरूपाया विषयादिस्वरूपत्वेन साध्याभाववद्विषयतात्वादिरूपसाध्याभाववद्वृत्तित्वस्य केवलान्वयितया तदवच्छिन्नाभावाप्रसिद्धे तादृशाभावघटितलक्षणानुपपत्ते, नच साध्याभाववद्विषयतात्वादिकं येन सम्बन्धेन अवृत्ति तेन सम्बन्धेन तदवच्छिन्नाभावमादाय लक्षणसमन्वय स्सम्भवतीति वाच्यम्, कालिकसम्बन्धेन साध्याभाववद्वृत्तित्वावच्छिन्नस्य योऽभाव स्तस्य ध्वंसाद्यधिकरण *हेत्वव्यापकतया स्वरूपसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकाभावस्य अवश्य निवेशनीयतया व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकताकाभावस्य लक्षणघटकत्वासम्भवात्, विषयताया ज्ञात्यादिरूपत्वेऽपि विषयतात्व वैशिष्ट्यस्य न समवायादिना वृत्ति, तादृशस्य स्वस्मिन्नेव वृत्ते, ज्ञात्यादौ च समवायाभावात्, किन्तु स्वरूपसम्बन्धेनैव, एवञ्च समवायादिसम्बन्धावच्छिन्नप्रतियोगिताक एव विषयतात्वावच्छिन्नाभावो लक्षणघटको भविष्यतीत्यपि न, कालज्ञानादिरूपहेतौ कालिकविषयितादिसम्बन्धावच्छिन्नप्रतियोगिताकसाध्याभाववद्वृत्तित्वावच्छिन्नाभावस्याऽसत्त्वेन स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यैव निवेशनीयत्वात् नचैव साध्याभाववद्वृत्तित्व वातिरिक्तसमानाधि

* "हेत्वव्यापकतया" इत्यपि पाठः।

करणधर्मानवच्छिन्नाभावस्यापि तत्राप्रसिद्धिः, घटत्वादेः साध्याभाववद्विषयतादिनिष्ठप्रतियोगितानैयधिकरण्यासम्भवादिति वाच्यम्; घटत्वादिना पटाद्यभावस्यैव तथात्वात्। अथैवमपि सामानाधिकरण्यमुपेक्ष्य साध्याभाववद्वृत्तित्वनिष्ठत्वेनधर्मविशेषणकल्पेघटत्वादेर्घटादिस्वरूपसाध्याभाववद्विषयतानिष्ठत्वेन गगनादेरपि स्वनिष्ठविषयतात्मकत्वेन साध्याभाववद्विषयतानिष्ठतया साध्याभाववद्वृत्तित्वत्वातिरिक्तवृत्तित्ववृत्तिधर्मानवच्छिन्नाभावाप्रसिद्ध्या उक्तस्थले अव्याप्तिर्दुर्वारैव, येन रूपेण यत् साध्याभाववद्वृत्तित्ववृत्ति तद्रूपावेशिष्ट तदनवच्छिन्नप्रतियोगिताकाभावविवक्षणेन गगनत्वविशिष्टगगनाद्यवच्छिन्नाभावस्य लक्षणघटकतानिर्वाहेपि हेतुनिष्ठत्वधिकरणधर्मावच्छिन्नसाध्याभाववद्वृत्तित्वव्यक्ते. किंचिदविशेषितसत्ताद्यवच्छिन्नप्रतियोगिताकाभावस्य तथाविधस्य हेतावसत्त्वादसम्भवप्रसङ्ग इति चेन्न; येन सम्बन्धेन यद्वर्तते तेन सम्बन्धेन तन्निष्ठावच्छेदकताकान्यत्वस्य तदनवच्छिन्नत्वस्य विवक्षणीयतया संयोगादिसम्बन्धावच्छिन्नघटत्वादिनिष्ठावच्छेदकताकाभावमादायोक्तस्थले लक्षणसमन्वयसम्भवात्; उक्तार्थलाभायैव *साध्याभाववद्वृत्तित्वोपादानम्, न तु तदपि लक्षणघटकम्*, प्रयोजनाभावात्; सर्वत्र दर्शिताभावमादायैव लक्षणसमन्वयसम्भवेन समवायादिसम्बन्धेन घटत्वावच्छिन्नसाध्याभाववत्संयुक्तत्वाद्यभावस्य लक्षणाघटकत्वेपि क्षतिविरहात्। एतेन धूमत्वत्वाद्यवच्छिन्नधूमत्वाद्यभावस्य धूमत्वप्रकारकप्रमाविषयत्वत्वाद्यवच्छिन्नाभावस्य च साध्याभाववद्वृत्तित्ववृत्तिधर्मानवच्छिन्नप्रतियोगिताकस्य वारणाय साध्याभाववद्वृत्तित्वप्रतियोगिकत्वविशेषणमप्यनादेयम्; अत एव स्वसमानाधिकरणत्वस्य प्रतियोगितावच्छेदकविशेषणत्वकल्पापेक्षया लाघवमेवैतत्कल्पानुसरणबीजभूतं निष्प्रत्यूहमिति ।

*यदि च गुरुधर्मो नाभावप्रतियोगितावच्छेदकः ? तदा* महानसवृत्तित्वत्वावच्छिन्नाभाववारणाय सा ध्या भा व व द् वृ त्ति त्व-

[दी] महानसवृत्तित्वादेरभावः तस्य धूमादौ स्वनिष्ठसाध्याभाववद्वृत्तित्व विरहस्य च हेत्वन्तरवृत्तेः स्वस्मिन् अवृत्तित्वेपि न क्षतिरित्याहुः ।

---

व्यापकताघच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावस्यैव लक्षणघटकतया घटत्वाद्यवच्छिन्नवह्न्यभावोपेक्षणम् . महानसवृत्तित्वादेरभाव इत्यत्र महानसवृत्तित्वत्वादिनेति बोध्यम् ।

यत्तु तादृशाभावाधिकरणमहानसवृत्तित्वत्वाद्यवच्छिन्नस्येति षष्ठ्यन्तव्याख्यानम् , तदसत् , गुरुधर्मस्य अभावप्रतियोगितावच्छेदकत्वेपि तादृशाभावाविशेषितमहानसवृत्तित्वत्वाद्यवच्छिन्नाभवमादाय दोषप्रसक्ते स्तद्विशेषितमहानसवृत्तित्वत्वाद्यवच्छिन्नाभावपर्यन्तानुसरणे सन्दर्भविरोधात् , अधिकरणान्तस्य उपलक्षणतया शेषांशस्य विशेषणतया भानस्य व्युत्पत्तिविरुद्धतया तथा विवक्षयितुमशक्यत्वात् । अधिकरणविशेषानुपरक्तवृत्तेरभावमादायापि दोषं दर्शयति — स्वनिष्ठे ति । धूमादिनिष्ठ साध्याभाववद्वृत्तित्वव्यक्ते स्तद्व्यक्तित्वावच्छिन्नाभावस्येत्यर्थः । हेत्वन्तर वृत्ते. — आलोकादिवृत्ते. । एतेन वृत्तिमद्वृत्तित्वमस्तीति सूचितम् । स्वस्मिन् — धूमादौ ।

अत्र च लक्षणे सत्ताभाववान् द्रव्यत्वादित्यादौ सत्तावत्समवेतत्वाभावस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव समवेतवृत्तित्वेपि द्रव्यमात्रवृत्तित्वाद्यवच्छिन्नाभावस्यापि साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकतया समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यापि तद्वत्समवेतत्वाभावस्य समवेतगुणत्वादिवृत्तितया द्रव्यत्वादेः तद्वत्त्वाभावान्नातिव्याप्ति. . एवमवृत्तिसाध्यकस्थलेपि साध्यतावच्छेदकावच्छिन्नव्यापकत्वाप्रसिद्ध्या नातिव्याप्ति. कूटघटितलक्षणे च तत्र तत्रातिव्याप्तिवारणाय साध्यसमानाधिकरणत्वे सतीति विशेषणं

[दी] अन्ये तु वृत्तिमद्वृत्तयो यावन्तस्साध्याभावसमुदायाधिकरण वृत्तित्वाभावास्तद्वत्त्वं तत्त्वम्; तादृशवृत्तित्वाभावस्यव्यापकतादृश वृत्तित्वत्वव्यापकप्रतियोगिताको बोध्य; प्रयोजनच

---

देयम् । एतल्लक्षणेचावृत्तिहेतुके अतिव्याप्तिवारणाय वृत्तिमत्त्वमात्रमुपा देयम् । कूटघटितलक्षणवदत्रापि महाकालान्यो घटादित्वादावतिव्याप्ति र्द्रष्टव्या, किन्तु तदन्यदोषाणामेव अत्र अनवकाश इत्यवधेयम् ॥

इति कूटाघटितलक्षणम् ।

## ॥ अथ कूटघटितलक्षणम् ॥

अन्ये त्विति । घटत्वादिना निर्धूमवृत्तित्वाभावमादाय व्यभिचारिण्यतिव्याप्तिवारणाय यावत्त्वोपादानम्; एवञ्च केवलान्वयिनः साध्यस्य व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव अभावस्य प्रसिद्ध्या तत्समुदायाधिकरणजगद्वृत्तित्वस्याऽवृत्तौ प्रसिद्धस्समानाधिकरणधर्माव-च्छिन्नाभावोपि यावदभावान्तर्गत इति तद्धत्वविरहात्तादृशसाध्यके विषयितावातिरिक्तसम्बन्धेन हेतावव्याप्ति; साधनसमानाधिकरणत्वेन साध्याभावविशेषणपक्षे च व्यतिरेकिणोपि साध्यस्य व्यधिकरणधर्माव च्छिन्नप्रतियोगिताकस्यैवाभावस्य सद्धेतौ लक्षणघटकतया जगत एव तत्कूटाधिकरणतया व्यतिरेकिसाध्यकेपि विषयितातिरिक्तसम्बन्धेन हेताव व्याप्तिरिति वृत्तिमद्वृत्तित्वमभावविशेषणम् । तादृशवृत्तित्वे ति । साध्या भावसमुदायाधिकरणवृत्तित्वेत्यर्थ । प्रयोजनंचे ति । पूर्वदलप्रयोजन आलोकाद्यवृत्तित्वेन निर्वह्निवृत्तित्वाभावमादाय वह्निमान् धूमादित्यत्राव्याप्ति वारणरूपं पूर्वलक्षणे उक्तमेव; चरमदलप्रयोजनं साधनसमानाधि करणत्वस्य साध्याभावविशेषणत्वे केवलान्वयिसाध्यके ज्ञेयत्वादिहेतौ घटादि-

[दी] उक्तप्रायम्; साध्याभावाधिकरणवृत्तित्वत्वव्यापकप्रतियोगिताकस्य व्यधिकरणधर्मावच्छिन्नाभावस्येव वृत्तिमद्वृत्तित्वाव्यभिचारिण्यतिव्याप्ति, अतस्समुदाये ति.

---

वृत्तित्वाभावमादायाव्याप्तिवारणमेव, न तु वह्निमान् धूमादित्यादौ महानसवृत्तित्वाद्यभावव्यावर्तनम्, तत्र महानसादेर्वह्नित्वाद्यवच्छिन्नवह्न्यभावानधिकरणत्वेन साध्याभावकूटानधिकरणत्वात् । एतस्य प्रागनुक्तत्वात् उक्तप्राय मिति । समुदायपदप्रयोजनमाह - **साध्याभावाधिकरणे** ति । **व्यधिकरणधर्मावच्छिन्नाभावस्यैवे** ति । निर्धूमवृत्तित्वत्वावच्छिन्ननिर्धूमवृत्तित्वाभावस्य प्रतियोगितायाः व्यधिकरणधर्मावच्छिन्नसाध्याभावाधिकरणमहानसादिवृत्तित्वावृत्तितया साध्याभावाधिकरणवृत्तित्वत्वाव्यापकतया जगद्वृत्तित्वसामान्याभावस्यैव तद्व्यापकप्रतियोगिताकतया तस्य समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकस्याऽवृत्तावेव प्रसिद्धत्वादिति भाव । **व्यभिचारिण्यतिव्याप्ति** रिति । तादृशस्य जगद्वृत्तित्वाभावस्य सर्वत्र सत्त्वादिति भाव ।

अत्र च स्वव्यापकसाध्याभावसमुदायाधिकरणवृत्तित्वत्वकत्वे सति साध्याभावसमुदायाधिकरणवृत्तित्वत्वव्यापकत्व प्रतियोगिताविशेषणम्, तत्र च शेषदले समुदायानिवेशेऽपि निर्धूमवृत्तित्वत्वाद्यवच्छिन्नाभावस्य लक्षणाघटकत्वेऽपि नातिव्याप्तिस्सम्भवति, व्यतिरेकिसाध्यके तादृशप्रतियोगितायाः एवाप्रसिद्धेः, जगद्वृत्तित्वसामान्याभावप्रतियोगितायाः साध्याभावाधिकरणवृत्तित्वत्वव्यापकत्वेऽपि स्वव्यापकसाध्याभावसमुदायाधिकरणवृत्तित्वत्वकत्वरूपपूर्वदलविरहात् धूमाभावसमुदायाधिकरणवृत्तित्वशून्ये महानसादिवृत्तित्वेऽपि तादृशप्रतियोगितासत्त्वादिति पूर्वपक्षयित्वा शेषदले समुदायप्रवेशे पूर्वदलमेव नोपादेयम्. तदनुपादानेऽपि वह्निमान् धूमा-

[दी] साध्याभावश्च साध्यतावच्छेदकसम्बन्धेन बोध्य, तेन समवायेन वह्नेस्साध्यत्वे धूमे संयोगेन च तथात्वे वह्न्यवयवत्वे पर्वत वह्न्यवयवसंयोगे च पर्वतस्य वह्न्यवयवस्य च सम्बन्धद्वयाव च्छिन्नवह्न्यभावद्वयानधिकरणत्वेऽपि नातिव्याप्तिः,

---

च्छेदकत्वत्वमपि नाभावप्रतियोगितावच्छेदकम्, वह्नित्वावच्छिन्नवह्न्य भाववद्वृत्तित्वनिष्ठान्योन्याभावप्रतियोगितावच्छेदकत्वत्वादिरूपसमनियत - धर्मापेक्षया व्यधिकरणधर्मावच्छिन्नसाध्याभावेनाधिकेन घटितस्य तस्य गुरुत्वादिति तादृशधर्मावच्छिन्नाभावो निवेशयितुमशक्य, किन्तु तादृ शान्योन्याभावप्रतियोगितावच्छेदकं यद्यत् तत्तद्भेदकूटस्यैव निवेशनीयम्, एवञ्च प्रतियोगिताव्यापकत्वघटितोक्तधर्मस्य प्रतियोगितानवच्छेदकत्व मकिञ्चित्करमेवेत्याहुः ।

च्छिन्नवह्न्यभावकूटाधिकरणसंयुक्तत्वस्य व्यधिकरणधर्मावच्छिन्नाभावस्यैव संयुक्तवृत्तित्वात् वह्न्यवयवमात्रसंयुक्तपदार्थाप्रसिद्धे संयुक्तमात्रस्यैव तादृशाभावकूटाधिकरणगगनसंयुक्तत्वादिति कथमत्र व्यावृत्तिप्रदर्शनम् ?, समवायेन धूमहेतुकस्थलपरता च न युज्यते, समवायेन धूमवत साध्याभावकूटाधिकरणत्वानिराकरणादिति वाच्यम्, संयुक्तमात्रस्य गगनादिसंयुक्तत्वेपि तादृशस्य संयोगस्य वृत्त्यनियामकतया * संयोगेन वह्न्यवयवान्यवृत्तित्वाभावस्य संयोगेन वृत्तिमद्वृत्ते सुलभतया वृत्तिपदस्य यथाश्रुतपरतामते तादृशव्यावृत्तिदानसङ्गते, वृत्त्यनियामकतादात्म्यादिसम्बन्धेन व्याप्तिस्वीकारे वृत्तिपदस्य सम्बन्धार्थकत्वमावश्यकम्, तथाच इदं महाकालान्यो घटा दित्येतत्समशीलमित्यभिप्रायेण एतदुपेक्ष्य द्वितीयस्थलानुसरणम् । साधनसामानाधिकरण्यस्य साध्याभावविशेषणत्वपक्षे समवायादिसम्बन्धावच्छिन्नवह्न्यभावस्य वह्न्यवयवत्वरूपसाधनसामानाधिकरण्याभावेन न तत्राव्याप्तिसम्भव, एवं सत्ताभाववान् द्रव्यत्वादित्यादावतिव्याप्तिवारणाय साध्यसामानाधिकरण्ये सतीति विशेषणप्रवेशस्यावश्यकतया संयोगादिना वह्निमत्यवर्तमाने वह्न्यवयवत्वादौ तेनाप्यतिव्याप्ति वारयितु शक्यत इत्यतः पर्वतवह्न्यवयवसंयोगहेतुकानुसरणम् । संयोगेन द्रव्यस्याव्याप्यवृत्तितापक्षे पर्वतस्य सम्बन्धद्वयावच्छिन्नवह्न्यभावद्वयाधिकरणत्वेपि न तस्य व्याप्यवृत्तित्वविशिष्टसाध्याभावकूटाधिकरणत्वम्, विवक्षणीयञ्चाव्यवस्थतादृशसाध्याभावकूटाधिकरणत्वम्, अन्यथा अव्याप्यवृत्तिसंयोगादिसाध्यके व्यभिचारिणि जगत एव साध्याभावकूटाधिकरणत्वेन अतिव्याप्तिरिति दर्शितहेतौ पर्वतवृत्तित्वेपि तादृशाभावकूटाधिकरणवृत्तित्वाभावो ऽक्षत एवेत्यतिव्याप्तिप्रसङ्ग ।

---

* अत्र—“ वस्य द्रव्यस्य वह्न्यवयव एवाधिकरणत्वप्रत्यय प्रामाणिको न त्वन्यत्र, तत्र संयोगेन गगनादिवृत्तित्वप्रतीत्यप्रसिद्धा ” इत्यपि पाठ ।

पस्य प्रत्येकानतिरिक्ततया प्रत्येकवृत्तेरुभयत्वाभावस्यापि प्रतियोगिसमानाधिकरणत्वादिति वाच्यम्, पृथिवीत्वघटत्वोभयत्वादिना यत्र साध्यता तत्र जातित्वावच्छिन्नाभावप्रतियोगितासमानाधिकरणस्य तादृशसाध्यतावच्छेदकाभावस्य प्रतियोग्यधिकरणावृत्तित्वविरहेण तादृशसाध्यतावच्छेदकस्य तादृशप्रतियोगिताव्यापकतापत्त्या तादृशाभावमादाय तदवच्छिन्नसाध्यकद्रव्यत्वप्रकारकप्रमाविषयत्वादिहेतावतिव्याप्त्यापत्तेः प्रतियोग्यनधिकरणवृत्तित्वस्यैव अभावे निवेशनीयतया उभयत्वाभावव्यावर्तनासम्भवात्, तदभाववति प्रत्येकं तदनधिकरणत्वात् तस्यैव तदनधिकरणतया अपि व्यासज्यवृत्तित्वादिति चेन्न, — सामानाधिकरण्यस्याव्याप्यवृत्तितापक्षे प्रतियोगिसामानाधिकरण्याभावविशिष्टाभाववत्ताघटितव्यापकताया एव निवेशसम्भवात्, पृथिवीत्ववायुत्वोभयत्ववति पृथिवीत्वावच्छेदेन तदभावस्य प्रतियोगिसमानाधिकरणत्वेपि जलत्वादे तत्सामानाधिकरण्याभावविशिष्टतदभाववत्त्वेन अतिप्रसङ्गाभावात् उभयत्वाद्यभावस्य तदभाववत्येकस्मिन्नपि तत्सामानाधिकरण्याभावानभ्युपगमात् तत्सामानाधिकरण्यावच्छेदकस्य प्रत्येकानतिरिक्तत्वात् ।

अथ वा यन्निरूपितव्याप्यतावच्छेदकताघटकसम्बन्धसामान्ये प्रतियोगित्वाधिकरणवृत्तिभिन्नयत्यनुयोगिकत्वाभावस्तदन्यत्वमेव प्रतियोगिव्यापकत्वम्, उभयत्वनिरूपितपर्याप्तौ च न प्रत्येकानुयोगिकत्वाभाव, तदनुयोगिनः प्रत्येकानतिरिक्तत्वादिति ।

यत्तु — प्राचीनमते रूपादिसामान्याभावस्य रूपतद्ध्वंसतत्प्रागभावत्रयप्रतियोगिकतया रूपध्वंसादिसाध्यकरूपादिहेतावतिव्याप्तिः, रूपादिसामान्याभावीयरूपध्वंसत्वावच्छिन्नप्रतियोगिताया साध्यतावच्छेदकसमनियतत्वेन तद्घटिताभावकूटाधिकरणे वायौ रूपादेरवृत्तेः, न च रूपस्यापि रूपध्वंसाभावरूपतया तद्घटितस्य रूपसामान्याभावाघटितकूट

स्यापि यावतामैकाधिकरण्यमिति विवक्षया लक्षणघटकत्वात् तद्वति हेतोर्वृत्त्या नोक्ताऽतिव्याप्तिरिति वाच्यम्, रूपादीनां प्रत्येकं स्वस्वध्वंसाभावरूपत्वेऽपि स्वान्यरूपादिध्वंसाद्यभावानात्मकतया साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वविरहेण लक्षणाघटकत्वादिति; तन्न, जलपरमाण्वादौ रूपध्वंसत्वावच्छिन्नाभावबुद्धिनिर्वाहाय जन्यरूपत्वावच्छिन्नाभावे रूपध्वंसत्वावच्छिन्नप्रतियोगिताकत्वकल्पनस्यावश्यकतया तत एव रूपादिसामान्याभाववत्यपि तत्प्रतीतिनिर्वाहात् रूपादिसामान्याभावस्य रूपध्वंसादिप्रतियोगिकत्वानभ्युपगमात् साधनसमानाधिकरणस्य साध्याभावविशेषणतापक्षे तेनाप्युक्तस्थले रूपादिसामान्याभावव्यावर्तनात् स्वनिरूपकाभाववत्त्वसम्बन्धेन साध्यतावच्छेदकसमनियतप्रतियोगिताकूटाधिकरणत्वमेव निवेश्य लक्षणस्य परिष्करणीयतया रूपादिसामान्याभावानधिकरणस्यापि जलपरमाण्वादेरुक्तस्थले तत्कूटाधिकरणत्वेन अतिव्याप्तेरनवकाशाच्च । प्रतियोगितायाः प्रतियोगिस्वरूपत्वमते नानाव्यक्तिसाध्यकस्थले साध्यतावच्छेदकसमनैयत्यस्य प्रत्येकं प्रतियोगितायामसत्त्वेऽपि स्वावच्छेदकावच्छिन्नतदभावीयप्रतियोगितात्वेन समनैयत्यविवक्षणान्न दोषः । तत्तद्वह्नितत्तद्धूमादिस्वरूपप्रतियोगितानामपि स्वावच्छेदकवह्नित्वधूमत्वाद्यवच्छिन्नतदभावप्रतियोगितात्वेन वह्नित्वधूमत्वादिसमनैयत्यात् वह्नित्वाद्यवच्छिन्नवह्न्यादिस्वरूपप्रतियोगितानां द्रव्यत्वाद्यवच्छिन्नाभावीयवह्न्यादिस्वरूपप्रतियोगितात्मकतया तदवच्छेदकद्रव्यत्वाद्यवच्छिन्नप्रतियोगितायाः घटादावपि सत्त्वात् न तत्प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगितात्वेन वह्नित्वादिसमनैयत्यमिति तदभावीयत्वविशेषणम्; तथा सति वह्नित्वाद्यवच्छिन्नाभावप्रतियोगिताया घटादावसत्त्वादनुपपत्तिः ।

यद्यप्येवमपि वाच्यत्वत्वादिसमनियतप्रतियोगित्वाप्रसिद्धिर्दुर्वारैव, व्यधिकरणधर्मावच्छिन्नाभावानामभिन्नतया वाच्यत्वादिस्वरूपवाच्यत्व-

[दी] तथा स्वव्यापकीभूतसाध्यतावच्छेदकव्यापकप्रतियोगिताकोपि,

---

पूर्ववदत्र साध्याभावपदेन साध्यतावच्छेदकविशिष्टव्यापकतावच्छेदकरूपावच्छिन्नाभावविवक्षणे नानाविपक्षके तथाविधतद्विपक्षावृत्तित्वावच्छिन्नाभावकूटाधिकरणाप्रसिद्ध्या अव्याप्तिः, साध्यतावच्छेदकविशिष्टसमव्यापकतावच्छेदकावच्छिन्नाभावनिवेशने गौरवमिति साध्यतावच्छेदकसमव्याप्तप्रतियोगिताकाभाव एव विवक्षितुमुचित, तार्णालार्णदहनवृत्तित्वावच्छिन्नप्रतियोगिताकानां तथाविधसाध्याभावानामधिकरणे धूमादेः वृत्तावपि वह्नित्वावच्छिन्नवह्न्यभावघटितवाहशाभावकूटवत्त्ववृत्तेरव्याप्त्यनवकाशादित्याशयेन तथाविधमेवाभाव निवेशयति — तथेति । स्वम् — प्रतियोगिता । समनियताभावैक्यमते साध्याभावप्रतियोगितया साध्याभावसमनियताभावप्रतियोगिपदार्थान्तरवृत्तित्वेपि साध्यतावच्छेदकेन व्यधिकरणेन वा धर्मेणावच्छिन्नाया साध्यमात्रवृत्तिप्रतियोगिताया साध्यतावच्छेदकसमनैयत्यमक्षतमेव ।

अथ घटत्वावच्छिन्ना या वाच्यत्वनिष्ठप्रतियोगिता सा घटादिभिन्नयावद्वस्तुवृत्तिरेकैव स्वीक्रियते, न तु वाच्यत्वादिमात्रवृत्ति, तथा सति घटत्वेन प्रमेयत्व नास्तीत्यादिप्रतीतिविषयप्रतियोगितान्तरकल्पने गौरवादिति तादृशप्रतियोगिताया न वाच्यत्वत्वादिरूपसाध्यतावच्छेदकसमनैयत्यमिति चेत्?, का क्षति?, वाच्यत्वभिन्नत्वेन वाच्यत्व नास्तीत्यादिप्रतीतिविषयमभाववशादायैव तत्र लक्षणसमन्वयसम्भवात्, व्यधिकरणवाच्यत्वभिन्नत्वावच्छिन्नाया प्रतियोगिताया वाच्यत्वभिन्नवृत्तित्वस्य सम्भावितत्वात् ।

वस्तुतस्तु, घटत्वावच्छिन्नवाच्यत्वाभावप्रतियोगितायां व्यधिकरणघटत्वादेरिव समानाधिकरणवाच्यत्वत्वादेरपि अवच्छेदकत्वमावश्यकम्, घटत्वेन वाच्यत्व नास्तीत्यादिप्रतीत्या वाच्यत्वत्वादे प्रतियोगितावच्छेदकत्वानवगाहने तादृशप्रतीतेर्वाच्यत्वत्वादिविशिष्टवैशिष्ट्यानवगाहि

त्वेन तत्र वाच्यत्वत्वादिप्रकारकज्ञानानपेक्षापत्तेः; एवंच घटत्वेन प्रमेयत्वं नास्तीत्यादिप्रतीतिविषयप्रतियोगितायाः अतिरिक्तत्वमावश्यकम्, अवच्छेदकभेदात्, इति घटत्वेन वाच्यत्वं नास्तीत्यादिप्रतीतिविषयप्रतियोगिता वाच्यत्वत्वादावेव वर्तते, नत्वन्यत्रापि, मानाभावात्, अतो घटत्वादिना वाच्यत्वाभावोपि लक्षणघटकः। अथैवं साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभावघटितलक्षणे वह्नित्वावच्छिन्नसाध्यकस्थले वह्नित्वादिना घटाद्यभावो लक्षणघटको न स्यात्, व्यापकतावच्छेदकवह्नित्वादिपर्याप्तप्रतियोगितावच्छेदकताकत्वविरहात्, महानसीयवह्नित्वाद्यवच्छिन्नाभाववारणायावच्छेदकतापर्याप्तिविवक्षणस्याव - श्यकत्वादिति चेन्न;— व्यापकतावच्छेदकपर्याप्तत्वं हि व्यापकतानवच्छेदकावृत्तित्वम्, तच्च इन्धनत्वाद्यवच्छिन्नवह्न्यभावप्रतियोगितावच्छेदकताया मक्षतमिति ताद्दशाभावमादायैव तल्लक्षणसमन्वयसम्भव इति। अत एव यत्रेन्धनत्वाद्यनवच्छिन्नवह्न्यभावाधिकरणीभूतमहानसवृत्तित्वादेर - भाव इति दीधितिग्रन्थसंगच्छते; अन्यथा इन्धनत्वादिना घटाद्यभावोपेक्षाया निर्बीजता ऽऽपद्येत; एवंच सार्वभौमाणामेतल्लक्षणाभिप्रायकतया समवायितया वाच्यत्वाभावो घट एव प्रसिद्ध इति गूढग्रन्थोपवर्णनमपि संगच्छते।

अथ पर्याप्तिसम्बन्धेन यत्रोभयत्वादिकं साध्यतावच्छेदकं तत्र प्रतियोगिताया अव्याप्यवृत्तित्वेन तत्पर्याप्त्यधिकरणप्रत्येकव्यक्तौ पर्याप्तिसम्बन्धेन उभयत्वादेरत्यन्ताभावस्य तदवच्छिन्नभेदस्य च सत्त्वात् तस्य प्रतियोगिताव्यापकत्वं न सम्भवति; नचाव्याप्यवृत्तिसंयोगादेर्यत्र साध्यतावच्छेदकता तत्र प्रतियोगिताव्यापकत्वनिर्वाहाय प्रतियोगिसामानाधिकरण्यं व्यापकताघटकाभावे निवेशनीयम्, तावता उभयत्वस्यापि व्यापकत्वं निर्वहति, पर्याप्तिसम्बन्धेन उभयत्वपर्याप्त्यधिकर-

[दी] तेन यत्र पृथिवीत्वाभावादौ साध्ये तत्तद्विपक्षावृत्तित्वाद्यवच्छिन्नप्रतियोगिताकाभावकूटाधिकरणमप्रसिद्धम्, तत्र सद्धेतौ पृथिवीत्वादौ साध्ये जातित्वाद्यवच्छिन्नाभाववति सामान्यादावर्तमाने द्रव्यत्वप्रकारकप्रमाविषयत्वादौ च नाव्याप्तिः, अति

भिन्नत्वाद्यवच्छिन्नाभावीयप्रतियोगितावच्छेदकघटत्वाद्यवच्छिन्नप्रतियोगिताना पटादावपि सत्त्वात्, यत्किञ्चिदेकधर्मावच्छिन्नतदभावीयप्रतियोगितात्वेन समनैयत्यघटकव्याप्यत्वविवक्षणे च पृथिवीत्वाद्यभावादिसाध्यकस्थले घटावृत्तित्वाद्यवच्छिन्नाभाववारणमशक्यम्, तदभावीयपृथिवीत्वाभावादिरूपप्रतियोगिताना पृथिवीत्वाभावत्वाद्यवच्छिन्नाभावीयप्रतियोगितात्मकतया पृथिवीत्वाभावत्वादिरूपतदवच्छेदकावच्छिन्नप्रतियोगितात्वेन पृथिवीत्वाभावत्वादिसमनैयत्यसत्त्वात्, तथापि यद्धर्मावच्छिन्नप्रतियोगितात्वेन यदभावनिरूपितत्वं तादृशधर्मावच्छिन्नतदभावीयप्रतियोगितात्वेनैव व्याप्यत्वनिवेशान्न दोषः, पृथिवीत्वाभावत्वावच्छिन्नप्रतियोगितात्वेन पृथिवीत्वादिरूपाभावमात्रनिरूपितत्वम् न तु घटावृत्तित्वावच्छिन्नाभावनिरूपितत्वमिति ।

यद्यपि पूर्वदलाम्रवधे वह्न्यादिसाध्यके धूमादिहेतौ साध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकव्यापकप्रतियोगिताकतत्तद्भेदावृत्तित्वावच्छिन्नाभावकूटाधिकरणस्य गुणादौ प्रसिद्धत्वेऽपि तत्र हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्ध्या अव्याप्तिसम्भव, तथापि साध्याभाववद्वृत्ति तादृशवृत्तेरप्रसिद्ध्या अव्याप्ति । तद्दलनिवेशेऽपि सत्तावान् जातेरित्यादौ वक्ष्यत इति स्थलान्तरे कूटाधिकरणाप्रसिद्ध्या अव्याप्तिवारणाय तमयोजनमाह — यत्र पृथिवीत्वाभावादा विति । तत्तद्विपक्षे ति । घटपटादिरूपेत्यर्थ । तत्र सद्धेता विति । तत्र — साध्ये च स्वद्रुतं गत्वादिमन्नेत्यर्थः । नाव्याप्ति रित्यनेनान्वय ।

[दी] व्याप्तिर्वा; साध्यभावत्वादिना ऽभावादौ साध्ये तत्तत्साध्याभाव कूटाधिकरणाप्रसिध्याऽव्याप्तिरित्याहुः; तन्न; — द्रव्यत्वपृथिवीत्वो-

यावतामैकाधिकरण्यं सम्भवति तावदभावसमुदायाधिकरणविवक्षायां तद्दोषासम्भवेन स्थलान्तरे व्याप्तिमाह—पृथिवीत्वादा विति। द्रव्यत्वादेः समवायेन हेतुत्वे जातित्वाद्यवच्छिन्नाभावघटितकूटाधिकरणे समवायेन वृत्तेरप्रसिद्धयाऽतिव्याप्तेरनवकाशात् स्वरूपसम्बन्धेन हेतुत्वानुसरणम्। साधनसमानाधिकरणत्वस्य साध्याभावविशेषणतापक्षे जातित्वाद्यवच्छिन्नाभावस्य साधनासमानाधिकरणतया वारणसम्भवेऽपि प्रत्येकं साधनसमानाधिकरणजलावृत्तित्वतेजोवृत्तित्वाद्यवच्छिन्नसमवायावच्छिन्नप्रतियोगिताकाभावकूटाधिकरणतायाः सामान्यादावेव सत्त्वादतिव्याप्तिर्दुर्वारैवेति ध्येयम्।

द्वितीयदलप्रयोजनमाह— नापी ति। घटत्वाभावत्वादिना साध्यतायां घटादावेव साध्याभावकूटाधिकरणत्वप्रसिद्धिः, अत उक्त मभावत्वादिने ति। आदिपदात्प्रमेयत्वादिपरिग्रहः। तत्तत्साध्ये ति। घटत्वाभावघटत्वाभावरूपसाध्यस्य यः स्वसाध्यतावच्छेदकव्याप्यप्रतियोगिताको घटत्वघटत्वादिरूपाभावः तत्समुदायाधिकरणाप्रसिध्येत्यर्थः। यावतामैकाधिकरण्यं सम्भवतीति विवक्षायामपि तादृशाभावसमुदायवति घटादौ हेतोर्वृत्तेरव्याप्तिरेव। नच यावता मैकाधिकरण्यसम्भवः तादृशतादृशाभावकूटाधिकरणं यद्यत् तावदन्यतमवृत्तित्वसमनियतप्रतियोगिताको ऽभावो विवक्षणीयः, घटवृत्तित्वत्वाद्यवच्छिन्नाभावश्च उपदर्शितस्थले न तथा, जगत एव तावदन्यतमान्तर्गतत्वात्; अपि तु घटत्वादिना जगद्वृत्तित्वसामान्याभाव एव वृत्तिमद्वृत्तित्वविशिष्टोऽभावः, तत्तदधिकरणान्यतमत्वं च तत्तदधिकरणावृत्तिशून्यत्वम्, न तु तत्तदधिकरणान्यान्यत्वम्, अतो नाप्रसिद्धिरिति वाच्यम्, एवमपि जातिप्रतियोगि-

कामाववान् मेयत्वादित्यादौ जातिमत्तामेव प्रत्येक घटत्वपटत्वघटित तादृशकूटाधिकरणतया जातिमद्वृत्तित्वावच्छिन्नाभावस्यापि तादृशतया अव्याप्तेर्दुर्वारत्वादिति ।

अत्र साध्याभाववत्तायां सम्बन्धविशेषानिवेशे कालपरिमाणवान् मेयत्वादित्यादावतिव्याप्तिः, कालस्यापि कालिकसम्बन्धेन कालपरिमाणाभावाधिकरणतया जगत एव साध्याभावकूटवत्त्वात्, दैशिकविशेषणतासम्बन्धनिवेशे च घटत्वाभाववान् पटत्वादित्यादावव्याप्तिः, घटत्वादेः तेन सम्बन्धेनावृत्तेः, तेन सम्बन्धेन तद्घटितकूटाधिकरणाप्रसिद्धेः, तेन सम्बन्धेन वृत्तिमत्त्वस्य अभावविशेषणत्वे तु घटत्वाभावादिसाध्यके व्यभिचारिणि व्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तिः, कालिकसम्बन्धावच्छिन्नप्रतियोगिताके घटत्वाभावाभावे सा चे आत्मत्वादिहेतावव्याप्तिश्च, घटातिरिक्तवस्तुमात्रस्यैव दैशिकविशेषणतया साध्याभावकूटवत्त्वात् । साध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धनिवेशेऽप्ययमेव दोषः, किञ्चिद्विशिष्टस्य तादृशसाध्यस्य योऽभावस्तस्य दैशिकविशेषणतासम्बन्धावच्छिन्नाभावस्वरूप इति दैशिकविशेषणताया अपि निरुक्तसाध्यनिरूपितप्रतियोगितावच्छेदकसम्बन्धत्वात्, स्वनिष्ठतादृशप्रतियोगितावच्छेदकसम्बन्धेन स्वाधिकरणत्वनिवेशे च व्यधिकरणधर्मावच्छिन्नाभावस्य साध्याप्रतियोगितया तदसङ्ग्रहप्रसङ्ग इति साध्यतावच्छेदकसम्बन्धेन स्वप्रतियोगितावच्छेदकविशिष्टसाध्यवत्ताज्ञानं प्रति यत्सम्बन्धावगाहियदभाववत्ताज्ञानप्रतिबन्धकं तेन सम्बन्धेन तदभावाधिकरणत्वं विवक्षणीयम्, व्यधिकरणधर्मावच्छिन्नाभाववत्ताबुद्धेरपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिप्रकारकबुद्धिं प्रतिबध्नातीति तादृशाभावस्य लक्षणघटकत्वानिर्वाहः, यद्वा भाववत्ताज्ञानं प्रति दैशिकविशेषणतासंसर्गकमपि तद्धर्मावच्छिन्नप्रकारकज्ञानं प्रतिबन्धकम्, अभावाभावस्य विरिक्तत्वमेव तादृशज्ञानप्रति-

न्धकताया आवश्यकत्वात्, तस्य प्रतियोगिस्वरूपतामतेपि फलसाम्यानुरोधेन तदावश्यकत्वात्, अभावाभावस्यातिरिक्तत्वग्रहदशायां तत्प्रतिबन्धकताया दुरपह्नवत्वाच्च, एवञ्च कालिकसम्बन्धावच्छिन्नप्रतियोगिताके घटत्वाभावजातित्वादेरभावे साध्ये आत्मत्वजातित्वादावव्याप्ति दुर्वारैव, दैशिकविशेषणतासम्बन्धस्यापि निरुक्तरूपाक्रान्तत्वात्। नचैवं तादृशसाध्यवत्यपि पक्षे तादृशसाध्याभावत्वावच्छिन्नप्रकारकप्रमारूपप्रतिबन्धकज्ञानसम्भवात् तद्विषयस्य हेत्वाभासतापत्तिरिति वाच्यम्, तत्र पक्षे साध्यं नास्तीति ज्ञानस्य भ्रमत्वं निर्विवादमिति तदुपपादनाय तादृशसाध्यप्रतियोगिनस्तादृशसाध्याभावस्येन दैशिकविशेषणतया वृत्त्यनभ्युपगमादित्युच्यते, तदा निरुक्तसम्बन्धेन साध्याभावत्वावच्छिन्नाधिकरणताकूटवत्त्वमेव विवक्षणीयम्. हेतुमति तादृशाधिकरणताविरहान्नोक्ताव्याप्तिः।

परे तु—घटत्वादेरपि दैशिकविशेषणतास्वीकार आवश्यक, अन्यथा घटे न घटत्वाभाव इत्यादिनञुल्लेख्यप्रतीतिव्यवहारयोरनुपपत्ति, काले न द्रव्यत्वमित्यादिप्रयोगाभावेन दैशिकविशेषणतासम्बन्धावच्छिन्नाधेयत्वान्वितस्वार्थाभावादिबोधजनकत्वस्यैव नञ्पदे व्युत्पन्नत्वात्; नच भावरूपप्रतियोगिवाचकपदसमभिव्याहृतनञा दैशिकविशेषणता, अभावरूपप्रतियोगिवाचकपदसमभिव्याहृतनञा च प्रतियोगिभूताभावप्रतियोगितावच्छेदकसम्बन्धः प्रत्याय्यत इति व्युत्पत्तिरिति वाच्यम्, प्रतियोगितावच्छेदकसम्बन्धत्वेन सम्बन्धताविरहाद्विशिष्य समवायकालिकादिसम्बन्धभानस्यैव उपगन्तव्यतया प्रतियोगिन्यभावे सम्बन्धविशेषावच्छिन्नप्रतियोगिताकत्वाबोधकात् अत्रायमभावो नास्तीत्यादितः सम्बन्धविशेषावच्छिन्नाधेयतायाः प्रतीतौ नियामकाभावात्; समभिव्याहारविशेषनिरपेक्षस्य तात्पर्यस्य नियामकत्वे कालिकादिसम्बन्धावच्छिन्नप्रतियोगिताकात्मत्वाभावाभावस्य समवायादिसंसर्गतात्पर्येण आत्मन्ययमभावो नास्तीति

[दी] अथवान् द्रव्यत्वादित्यादौ तदुभयान्यतरत्वावच्छिन्नाभाववति

---

प्रयोगप्रसङ्गात् वास्तवतत्सम्बन्धावच्छिन्नप्रतियोगिताकाभावरूपप्रतियोगि
साधकपदसमभिव्याहारस्य तत्सम्बन्धाभावनियामकत्वे वस्तुतः
कालिकसम्बन्धावच्छिन्नप्रतियोगिताके अ स्मि न् भा वे का लि क
सम्बन्धावच्छिन्नप्रतियोगिताकत्वसंशयदशायां अत्रायमभावो नास्तीति
वाक्यादधिकरणे एतदभावाभावप्रतीतावपि अधिकरणे कालिकसम्बन्धेन एत
दभावाभाववत्त्वादिसंशयस्य सर्वानुभवसिद्धस्य उच्छेदापत्तेः। अथैवं
कालादावपि कालिकसम्बन्धावच्छिन्नघटत्वाभावो नास्तीति प्रतीत्यनुरो-
धेन घटत्वादेर्दैशिकविशेषणतास्वीकारावश्यकतया तत्र समवायावच्छिन्न
घटत्वाभावो नास्तीति व्यवहारापत्तिरिति चेन्न, प्रतियोगिमति तदभाव
त्वेन वृत्तेरनभ्युपगमात्; इत्थञ्च दैशिकविशेषणतासम्बन्धेन साध्या
भावत्वावच्छिन्नवत्त्व लक्षणे निवेशनीयम्, कालिकसम्बन्धावच्छिन्नप्रति
योगिताकघटत्वाभावाभाववान् आत्मत्वादित्यादौ घटत्वाभावस्य तादृश
साध्याभावत्वेन आत्मन्यवृत्तेर्नाव्याप्तिः; एतेन यादृशसाध्यकस्थले साध्या
धिकरणे साध्याभावस्य तदधिकरणे च साध्यस्य च न भ्रमः सिद्धः,
तत्र प्रतिबध्यप्रतिबन्धकभावकल्पनाया असम्भवेन प्रतिबन्धकताघटित
लक्षणाव्याप्तिरिति निरस्तमिति वदन्ति।

तदुभये ति। द्रव्यत्वपृथिवीत्वान्यतरत्वावच्छिन्नप्रतियोगिताया
अपि तदुभयत्वसमनियततया तादृशाभाववतो गुणादेरेव निरुक्तसाध्या
भावकूटाधिकरणत्वादिति भावः।

प्रतियोगिवैयधिकरण्याघटितस्य व्यापकत्वस्य साध्यतावच्छेद
कविशिष्टसाध्यस्य तदुभयत्ववति नैकगुणवत्त्वाभाववत्त्वेन तस्य
प्रतियोगित्वाव्यापकत्ववारणे तु तद्रूपावच्छिन्नसाध्यकसद्धेतावव्याप्तिर्द्रष्टव्या।

[दी] द्रव्यत्वादेरवृत्तेरतिव्याप्तेः । अपि च इदं पृथिव्यन्यत्वविशिष्टद्रव्यत्ववत् द्रव्यत्वादित्यादौ द्रव्यत्वत्वाद्यवच्छिन्नाभावकूटाधिकरणगुणाद्यवृत्तित्वस्य द्रव्यत्वे सत्त्वादतिव्याप्तिः, द्रव्यत्वत्वाद्यवच्छिन्नप्रतियोगिताया: पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वसमव्याप्तत्वात् । किञ्च रूपाभावसाध्यकसद्धेतौ साध्याभावसमुदायनिविष्टसकलरूपव्यक्त्यधिकरणाप्रसिद्धिः, यावतामैकाधिकरण्य सम्भवति तावतां समुदाये विवक्षितेपि " इदं पृथिवीशिशिगुणशून्यम्, सत्तान्य

---

व्यासज्यवृत्तित्वाव्यासज्यवृत्तित्वान्यतररूपेण साध्यतावच्छेदकसजातीयो यो धर्मः तदवच्छिन्नत्वस्य प्रतियोगिताविशेषणत्वोपगमे नेतादृशातिव्याप्तेरवकाश इत्यतः स्थलान्तरे अतिव्याप्तिमाह – अपिचे ति । द्रव्यत्वत्वाद्यवच्छिन्ने ति । शुद्धद्रव्यत्वत्वाद्यवच्छिन्नेत्यर्थः । पृथिव्यन्यत्वविशिष्टद्रव्यत्वत्वसमव्याप्तत्वा दिति । विशेषणावच्छिन्नस्य शुद्धविशेष्यानतिरिक्तत्वादिति भावः । तदवच्छिन्नाभाववतो गुणादेरेव यथोक्तसाध्याभावकूटाधिकरणत्वादिति भाव· ।

विशिष्टस्यातिरिक्तत्वेन साध्यतावच्छेदकस्य प्रतियोगिताव्यापकत्वस्थले प्रतियोगितावच्छिन्नव्यापकतावच्छेदकत्वनिवेशेन वा विशिष्टद्रव्यत्वादिसाध्यकस्थले शुद्धद्रव्यत्वाभावस्य वारणसम्भवात् दूषणान्तरमाह— किञ्चे ति । रूपाभावे ति । रूपत्वाद्यवच्छिन्नाभाव इत्यर्थः । सद्धेतावित्यव्याप्तिसूचनाय । सकलरूपव्यक्त्यधिकरणाप्रसिद्धि रिति । तथाच तद्घटितसाध्याभावकूटाधिकरणाप्रसिद्ध्या अव्याप्तिरिति भावः । यावता मिति । तथाच प्रकृते सकलरूपघटितसमुदायस्य न लक्षणघटकता, सकलरूपाणामैकाधिकरण्यविरहात्, किन्तु एकैकरूपव्यधिकरणधर्मावच्छिन्नाभावघटितकूटानामेव, प्रत्येकं तदाधिकरणता च रूपवत्स्वेव प्रसिद्धेति नाव्याप्त्यवकाश इति भावः । इद मिति । वायौ पृथिवीवृत्ति-

[दी] पृथिवीवृत्तित्वशून्य वा वायुः गन्धरूपवदन्यत्वाद् " इत्यादौ अति व्याप्ति, तत्र तादृशसाध्याभावकूटस्य नियमतो रूपादिघटितत्वेन

---

द्वित्वसंयोगादिसत्त्वाद्वायुत्वादेरुक्तसाध्यव्यभिचारिता, गुणसामान्याभावस्य साध्यत्वे वायवीयस्पर्शादिरपि साध्याभाव, तद्घटितनिरुक्ताभावकूटवद्वृत्तित्वाभावस्य यावदन्तर्गतस्य वायुत्वादावभावान्नातिव्याप्तिसम्भव इति पृथिवीवृत्ती ति । घटतद्वायुद्वित्वपटतद्वायुद्वित्वादिरूपपृथिवीवृत्तिगुणाभावाभावाना यावता वायावैकाधिकरण्यसम्भवेन तद्घटितकूटस्यापि लक्षणघटकतया तद्वति वायौ हेतोर्वृत्त्या नातिव्याप्तिसम्भव । नच द्वित्वादिरूपसाध्याभावस्य उत्पत्तिकाले असत्त्वेन कालिकाव्याप्यवृत्तितया व्याप्यवृत्तित्वविशेषणेन तद्व्यावृत्ति, पार्थिवपरमाण्वेकत्वादिरेव लक्षणघटक इत्यतिव्याप्तिर्दुर्वारैवेति वाच्यम्, प्राचीनमते द्वित्वादिमति तत्प्राग्भावादिकालावच्छेदेन तदत्यन्ताभावासत्त्वात् द्वित्वादेरपि व्याप्यवृत्तित्वादेति पृथिवीपदमेतत्पृथिवीपरम्, इदम्पदपृथिवीपदयो कर्मधारयो वा ऽभिमत, नच स्वसमानाधिकरणाभावाप्रतियोगित्वमनवच्छिन्नवृत्तिकत्व वा व्याप्यवृत्तित्वम्, न तु स्वसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम्, तच्च न द्वित्वादिसाधारणमिति पृथिवीपदस्य पृथिवीसामान्यपरत्वेपि न क्षतिरिति वाच्यम्, एतदतिव्याप्तिवारणानुरोधेन अत्यन्ताभावघटित व्याप्यवृत्तित्वस्यैव निवेशयितुमुचितत्वात्, एतद्रूपात्यन्ताभाववान् मेयत्वादित्यादावेतद्रूपात्मकाभावस्य लक्षणाघटकत्वे अतिव्याप्त्यापत्त्या प्राचीन मते अत्यन्ताभावघटितव्याप्यवृत्तित्वनिवेशस्यावश्यकत्वाच्च, अत एव चाग्रेतन रूपादिघटितत्वेने त्यपि साधु सङ्गच्छते, पार्थिवरूपमात्रस्यैव मनित्यतया ऽत्यन्ताभावघटितव्याप्यवृत्तित्वानिवेशे तदसङ्गत्यापत्ते । पृथिवीवृत्ती त्यत्र वृत्तिस्समवायेन बोध्या, तेन स्पर्शादे कालिकसम्बन्धेन पृथिवीवृत्तित्वेपि न क्षति, पृथिवीसमवेतत्वावच्छिन्नाभावो

गुरुधर्मस्य प्रतियोगितानवच्छेदकत्वे असिद्धे, पृथिवीसमवेतत्वावच्छिन्नत्वेनाभिमताया प्रतियोगितायां केवलसमवेतत्वस्यैवावच्छेदकत्वसम्भवेन पृथिवीसमवेतत्वस्य अभावप्रतियोगितानवच्छेदकत्वात् । नच पृथिवीसमवेतत्वावच्छिन्नाया जलत्वादिव्यावृत्तप्रतियोगितायाः अतिप्रसक्तसमवेतत्वेनावच्छेदकत्वमसम्भव इति वाच्यम्; समवेतत्वावच्छिन्नप्रतियोगितातोऽतिरिक्ताया जलत्वादिव्यावृत्तप्रतियोगिताया एवाऽप्रसिद्धेः; गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वेऽपि पृथिवीसमवेतत्वावच्छिन्नाभावसाध्यके नातिव्याप्तिसम्भव, तादृशाभावस्य समवेतत्वावच्छिन्नाभावसमनियततया तदभिन्नत्वेन समवेतमात्रस्यैव तदभावतया वायुत्वादेरपि तद्वत्त्वात् । नच पृथिवीसमवेतत्वविशिष्टाभाववति जलादौ समवेतत्वावच्छिन्नाभावविरहात् तत्र स्वसमवेतत्वम्, एवञ्च गुरुधर्मस्याभावप्रतियोगितानवच्छेदकत्वमतेऽपि पृथिवीसमवेतत्वस्य तादृशविशिष्टाभावप्रतियोगितावच्छेदकत्वमावश्यकम्, समवेतत्वविशिष्टवति जलादौ तत्सत्त्वेन तन्मात्रस्य तत्प्रतियोगितावच्छेदकत्वासम्भवादिति वाच्यम्; विशिष्टाभावस्य साध्यत्वे तस्य वायुसाधारणतया सद्धेतुत्वप्रसङ्गेन पृथिवीसमवेतत्वोपलक्षिताभावस्यैवात्र साध्यतयाभिमन्तव्यत्वादिति गुणपक्षोपादानम् । पृथिवीसमवेतगुणत्वावच्छिन्नाभावो गुणाविभावात्मकस्मात्र समवेतत्वावच्छिन्नाभावसमनियत इति नोक्तदोषावसरः ।

ध्वंसप्रागभावावच्छिन्ने सामान्याभावमुपगच्छतां वाय्वादेरप्युत्पत्तिकालावच्छेदेन पृथिवीवृत्तिगुणसामान्याभाववत्त्वात्तत्साध्यको वायुत्वादिः सद्धेतुरेवेत्यतो नातिव्याप्तिसम्भव इत्यत उदाहरणान्तरमाह — सत्तान्ये ति । सत्तान्यत्वनिवेशनप्रयोजनं पूर्ववत् । वायुत्वादेरपि समवेताभावाभाववत्त्वात् पृथिवी ति । अत्र पृथिवीपदं पृथिवीसामान्यपरमेव, घटवायुद्वित्वादेः स्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वेन व्याप्यवृत्तित्व-

[दी] वह्नति हेतोरवृत्ते । वस्तुतो निखिलानामेव रूपाणा

---

विशेषणव्यावर्त्यत्वात् । रूपादिघटितत्वेन तत्र रूपपदोपादानं प्राचीन मताभिप्रायेण पूर्वसाध्यमभिप्रेत्य । हृतौ साध्यसामानाधिकरण्यविशेषणेन वायुत्वे अतिव्याप्तिः, अतो द्वितीयहेत्वनुसरणम् ।

ननु समनियताभावैक्यमते सत्तान्यपृथिवीसमवेतत्वावच्छिन्ना-
भावस्य सत्तान्यद्रव्यसमवेतत्वावच्छिन्नाभावाभिन्नतया निम्बसमवेतपृथिवी-
समवेतत्वावच्छिन्नाभावस्य च निम्बसमवेतस्पर्शवत्समवेतत्वावच्छिन्नाभावा-
भिन्नतया वायुत्वादेरपि तदभाव इति न तादृशाभावसाध्यके अति-
व्याप्तिस्सम्भवतीति पूर्वोक्ताया रूपाभाववान् वायुत्वादित्यत्रातिव्याप्ते-
रेवोक्तविवक्षायां दुर्वारतामाह — वस्तुत इति । अत्रायमाशयः, —
यावतामेकाधिकरण्यं तावत्समुदायाधिकरणमित्यस्य यत्किञ्चिदधिकरणवृत्ति-
सकलसाध्याभावाधिकरणत्वं यत्किञ्चिदधिकरणवृत्तिसाध्याभावत्वव्यापका-
धेयताकत्वपर्यवसितमर्थः, साध्याभावाधिकरणाधिकरणत्वसकलसाध्याभावाधि-
करणत्वं साध्याभावसमानाधिकरणसाध्याभावत्वव्यापकाधेयताकत्वपर्यव-
सितं वा, आद्ये व्यभिचारिमात्रेतिव्याप्तिः, अन्त एव साध्यवद्यत्किञ्चि-
दधिकरणवृत्तिसकलसाध्याभाववत्त्वादिति समुदायोपादानस्य ऽकिञ्चित्कर-
तया तद्विशेषणासम्भवः; द्वितीये च — साध्याभावसमानाधिकरणसाध्या-
भावत्वमुक्तस्थले निखिलरूपाणामेव अक्षतमिति तादृशसाध्याभावत्व-
व्यापिका न केनाप्यधिकरणेन निरूपिताधेयतेति तादृशाधिकरणा-
ऽप्रसिद्धिस्तदवस्थैवेति ।

ननु स्ववृत्तिसाध्याभावत्वव्यापक यद्यदधिकरणवृत्तित्वं तत्तदधि-
करणवृत्तिसाध्याभावत्वव्यापकस्ववृत्तिताकाधिकरणसमवाधिकरणतार्थं, धूम-
वान् वह्नेरित्यादौ महानसादिकं न तथा, अयोगोलकवृत्तिताया स्ववृत्ति

[दी] तादृशाभावसहस्रसमानाधिकरणत्वात् समानाधिकरणयावदभावाधिक-

---

साध्याभाववत्त्वव्यापकत्वादयोगोलकवृत्तिसाध्याभाववत्त्वस्य च समानाधिकरण धर्मावच्छिन्नसाध्याभावसाधारणतया तद्वृत्तित्वाव्याप्यत्वादित्ययोगोलका द्येव तादृशं स्यादिति नातिव्याप्तिः । तादृशयत्किंचिदधिकरणहृदादि वृत्तित्वाभावस्य वह्न्यादौ सत्त्वेपि न क्षतिः, तादृशं यद्यत्स्व ताव दन्यतमवृत्तित्वत्वसमनियतप्रतियोगिताकाभावनिवेशात् । अन्यतमत्वं च तत्तद्वृत्तिशून्यत्वम्, न तु तत्तदन्यान्यत्वम्; अतो न केवलान्वयिसा ध्यके अप्रसिद्धिः । तादृश एव यद्यत्तदधिकरणवृत्तित्वाभावकूटवत्त्व निवेशेपि केवलान्वयिसाध्यके अव्याप्ति, हेतुगतोपि तथात्वात् इति तदुपे- क्षितम् । रूपसामान्याभाववान् वायुत्वादित्यादौ च सकलरूपवतामेव तथात्वं स्ववृत्तितया एव तत्तद्घटादिवृत्तिसाध्याभावस्याव्यापकत्वात्, अतो नाव्याप्तिः ।

अथ वा स्ववृत्तिसकलसाध्याभावसमानाधिकरणसाध्याभावत्वावच्छेदेन यदधिकरणवृत्तित्वं तादृशयत्किंचिदधिकरणवृत्तिसकलसाध्याभाववत्त्वमेव यावत्ता मित्यादेरर्थः; धूमवान् वह्नेरित्यादौ तादृशयत्किंचिदधिकरणं न साध्यवत्, तद्वृत्तिसकलसाध्याभाव समानाधिकरणस्य साध्यतावच्छे- दकावच्छिन्नसाध्याभावस्य तद्वृत्तित्वाभावात्; किन्तु अयोगोलकाद्ये वेति तद्वृत्तिसकलसाध्याभाववत्त्व साध्यशून्यस्यैवेति जगतः अतथा त्वान्नातिव्याप्तिः । रूपाभाववान् वायुत्वादित्यादौ च तादृशाधिकरणं तत्तद्घटादिरेव, व्यधिकरणधर्मावच्छिन्नसाध्याभावस्यैव तद्वृत्तिसकल साध्याभावसमानाधिकरणत्वात्तस्य च तद्वृत्तित्वनियमादिति नाव्याप्त्यव काशः । शेषं पूर्ववत् ।

वृत्तित्वविशिष्टसत्त्वादौ नातिव्याप्तिः । नच सत्तायाः साध्याभावकूटवद्गुणादिवृत्तित्वसत्त्वाद्विशिष्टसत्त्वे तदभावस्य दुर्लभतया नोपदर्शितसाध्यके विशिष्टसत्त्वे अतिव्याप्तिप्रसक्तिरिति वाच्यम्, साधनतावच्छेदकावच्छिन्नत्वानिवेशे द्रव्यत्वादिसाधकविशिष्टसत्त्वे अव्याप्तिवारणाय विशिष्टानुयोगिकाभावाभ्युपगमस्यावश्यकतया उक्तस्थले अतिव्याप्तिप्रसक्तेः । संयोगे साध्ये संयोगेन घटादिहेतौ संयोगत्वावच्छिन्नसंयोगाभावस्य उत्पत्तिकालावच्छेदेन साधनवति वृत्तेर्व्याप्यवृत्तित्वविशिष्टस्याधिकरणे गुणादौ संयोगेन वृत्तेरप्रसिद्ध्या अव्याप्तिः संयोगी सत्त्वादित्यादौ जगत एव संयोगाभाववत्त्वेन अतिव्याप्तेर्वारणाय व्याप्यवृत्तित्वविशिष्टाभाववत्तानिवेशनस्यावश्यकत्वादित्यत्र अनवच्छिन्नैव वृत्तिरत्र प्रवेश्या ।

अथ साधनसमानाधिकरणत्वेन साध्याभावे विशेषितेऽपि सत्तावान् जातेरित्याद्यव्याप्तिवारणमशक्यमेव, प्रत्येकं साधनसमानाधिकरणाभ्यां द्रव्यत्वविशिष्टसत्ताभावद्रव्यान्यत्वविशिष्टसत्ताभावाभ्यां घटिताभावसमुदायस्य सामान्यादावेव सत्त्वात् तत्र च हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्धेः । न तु— द्रव्यत्वादिविशिष्टसत्ताभावप्रतियोगितावच्छेदककोटौ सत्तात्वं न निवेश्यते, द्रव्यत्वादिवैशिष्ट्यमात्रस्यैव तत्प्रतियोगितावच्छेदकत्वसम्भवादिति द्रव्यत्वादिसाधारणद्रव्यत्वादिवैशिष्ट्यावच्छिन्नाभावप्रतियोगितायाः सत्तात्वसमनैयत्यविरहाच्च तादृशाभावस्य लक्षणघटकतेति समाधानम्, तदपि तुच्छम्, द्रव्यत्वविशिष्टसत्तावान् जातेरित्यादावपीदृशयुक्त्या साध्यतावच्छेदकतादृशविशिष्टसत्तात्वस्य अभावप्रतियोगितानवच्छेदकत्वात् द्रव्यत्वादिवैशिष्ट्यावच्छिन्नाभावस्य च साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वाभावाद्यधिकरणधर्मावच्छिन्नाभावमादायातिव्याप्तेर्दुर्वारतया एतल्लक्षणवादिना गुरुधर्मस्याभावप्रतियोगितावच्छेदकत्वमवश्यमवलम्बनीयत्वात् द्रव्यत्वविशिष्टसत्ताभावादेः प्रतियोगितावच्

च्छेदकत्वेऽपि समवेतत्वात् जातेरित्यादौ समवायेन एतद्रूपान्यत्वविशिष्टाभावतद्रूपान्यत्वविशिष्टाभावादीनां समवेतत्वसमनियतप्रतियोगिताकतया प्रत्येकं साधनसमानाधिकरणतया च तद्घटितकूटाधिकरणे सामान्यादौ हेतुतावच्छेदकसम्बन्धेन वृत्तेरप्रसिद्ध्या अव्याप्तिवारणासम्भवात् । एवं विशिष्टस्यातिरिक्तत्वमतावलम्बनाद्दर्शितविशिष्टाभावानां साध्यतावच्छेदकसमनियतप्रतियोगिताकत्वविरहापादनेन समाधानमपि हेयम्, उक्तस्थल एव द्रव्यत्वतदन्यसमवेतोभयगुणत्वतदन्यसमवेतोभयकर्मत्वतदन्यसमवेतोभयाभावानां साध्यतावच्छेदकसमवेतत्वसमनियतप्रतियोगिताकानां प्रत्येकं साधनसमानाधिकरणानां समुदायवति सामान्यादौ समवायेन वृत्तेरप्रसिद्ध्या अव्याप्तेः तावतापि वारणासम्भवात् । न च यादृशसाध्याभावस्तोमाधिकरणे साधनाधिकरणे तादृशस्तोमाधिकरणवृत्तित्वाभावस्य विवक्षितत्वात् उक्ताभावसमुदायाधिकरणस्य साधनवत्त्वसम्भवात् न तत्समुदायस्य लक्षणघटकतेति नाप्रसिद्धिरिति वाच्यम्, एवं सत्यपि तादृशविशिष्टाभावाद्येकतरव्यधिकरणधर्मावच्छिन्नसाध्याभावस्तोमस्य तादृशस्याधिकरणे केषाञ्चिद्वृत्तिमत्तायामवृत्ते साधनस्य च वृत्तेरव्याप्तितादवस्थ्यात् एतादृशविवक्षानुसरणे भूतत्वमूर्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यत्र भूतत्वमूर्तत्वोभयघटितसाध्याभावकूटवति हेतोरवृत्तितया वक्ष्यमाणातिव्याप्तेरसङ्गतिप्रसङ्गाच्च, साधनवतो निस्स्पर्शस्य कस्यचिदपि तादृशोभयघटितस्तोमाधिकरणत्वविरहेण तादृशस्तोमस्य लक्षणाघटकत्वात् प्रतियोगितायां साध्यतावच्छेदकव्याप्यत्वविशेषणवैयर्थ्यापत्तेश्च पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ जलावृत्तित्वतेजोवृत्तित्वावच्छिन्नाभावघटितकूटवत्त्वस्य कस्यचिदपि साधनवत्त्वसत्त्वेन तादृशकूटस्य लक्षणाघटकत्वात् यादृशकूटवत्त्वं साधनवतस्तद्वृत्तित्वाभावस्य साधने असम्भावितत्वादिति व्याप्त्यनवकाशादिति चेत् ,—

भिन्नत्वमव्याहतमेवेति वाच्यम्, एवमपि गगनत्वादिना प्रमेयसामान्याभावस्य समानाधिकरणधर्मतादृशसम्बन्धावच्छिन्नप्रतियोगिताकतया उक्ताभावस्य तदभिन्नत्वेन तत्र विशिष्टभेदनिर्वाहाय तादृशविशेषणस्यावश्यकत्वात् समानाधिकरणसम्बन्धावच्छिन्नत्वविशेषणं परित्यज्य साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं प्रतियोगितायां निवेश्य तत्कार्यस्य साध्यतावच्छेदकव्यापकत्वरूपप्रतियोगितावच्छेदकविशेषणसार्थकत्वस्य चोपपादनसम्भवाच्च साध्यवद्वृत्तित्वादृशाभावश्च उभयत्वादिना साध्याभाव एव प्रसिद्ध इति न काचिदनुपपत्तिरिति । एतेन नीलरूपघटत्वोभयाभाववान् नीलघटान्यत्वादित्यादौ साधनसमानाधिकरणं पटीयनीलरूपं घटत्वं च न घट इति तादृशनीलरूपघटत्वात्मकसाध्याभावघटितकूटाधिकरणाप्रसिद्ध्या अव्याप्तिरित्यपि निरस्तम्, तादृशाभावे उक्तभेदासत्त्वेन व्यधिकरणधर्मावच्छिन्नाभावस्यैव लक्षणघटकत्वात् । एवं घटवृत्तित्वविशिष्टाकाशाभावादेरभावे साध्ये मेयत्वादिहेतौ साध्याभावस्य विशिष्टाकाशाभावादेराकाशाभावानतिरिक्ततया जगत एव साध्याभावकूटाधिकरणतापत्त्या असिन्व्याप्तिरिति साध्याभावत्वविशिष्टाधिकरणत्वमेव विवक्षणीयम्, तथा च पटे पटवृत्तित्वविशिष्टाकाशाभावाभावो नास्तीत्यादिप्रत्ययाभावात् पटादेर्न तादृशविशिष्टाभावाधिकरणत्वमिति न दोषः, एवञ्च साधनाधिकरणेपि साध्याभावत्वेन वृत्तिर्विवक्षणीया, अन्यथा जातिमदन्यत्वविशिष्टाकाशाभावस्य अभावे साध्ये समवायेन हेतौ साधनसमानाधिकरणाकाशाभावस्य साध्याभावत्वविशिष्टस्याधिकरणे सामान्यादौ समवायेन वृत्तेरप्रसिद्धत्वादव्याप्त्यापत्ते तादृशविवक्षणात्पुनरुक्तोभयाभावसाध्यकस्थले अव्याप्तिवारणं सम्भवति, प्रत्येकाधिकरणे उभयाभावाभावत्वेनावृत्तेः ।

वस्तुतो घटवृत्तित्वविशिष्टाकाशाभावाद्यभावो घटत्वाद्यभावसमनियततया तदभिन्न इति घटत्वादिरपि तदभाव, इत्थञ्च तद्घटितकूटाधिकरणता न जगत इति दर्शिताव्याप्त्यनवकाशात् साध्याभावत्वविशिष्टाधिकरणत्वविवक्षणमफलम्, साध्याभावत्वेन साधनवद्वृ

[दी] तथापि भूतत्वमूर्तत्वयोरन्यतरत्वेनाभावे साध्ये स्पर्शवदन्यत्वा दावतिव्याप्तिः तादृशसाध्याभावसमुदायवति पृथिव्यादौ तस्यावृत्तेः।

---

पित्थ तु साध्याभावत्वविशिष्टाधिकरणत्वाविवक्षणेपि घटान्यत्वविशिष्ट द्रव्यत्वाभाववान् घटत्वादित्यत्र साध्याभावस्य द्रव्यत्वस्य द्रव्यत्वत्वा दिना साधनसमानाधिकरणतया द्रव्यस्यैव तद्घटितकूटाधिकरणत्वेन अव्याप्तेर्वारणाय निवेश्यमेव; नचैवमपि पृथिव्यन्यत्वविशिष्टद्रव्यत्व वत् द्रव्यत्वादित्यादौ साध्यतावच्छेदकविशिष्टवद्वृत्त्योः प्रत्येक साधन समानाधिकरणयोर्घटान्यत्वविशिष्टद्रव्यत्वाभाव घटेतरपृथिव्यन्यत्वविशिष्ट द्रव्यत्वाभावयोरधिकरणं गुणादावेवेत्यतिव्याप्तिर्दुर्वारैवेति वाच्यम्; विशिष्टस्यातिरिक्ततापक्षमवलम्ब्यैव तादृशातिप्रसङ्गस्य समापादुं शक्यत्वा दिति ।

भूतत्वमूर्तत्वायो रिति । उभयत्वावच्छिन्नाभावस्य साध्यत्वे हेतोर्व्यभिचारित्वाभावादन्यतरत्वावच्छिन्नाभावस्य साध्यतानुसरणम् । पृथिव्यादा विति । आकाशे भूतत्वस्य मनसि च मूर्तत्वस्य साधन समानाधिकरणतया आकाशस्य मनस. प्रत्येक तदुभयानधिकरणत्वेन साध्याभावसमुदायानधिकरणत्वादिति भाव । आदि शब्दाद्भूतभेदमूर्त भेदान्यतराभाववान् भूतमूर्तान्यतरत्वादित्यादौ भूतभेदमूर्तभेदात्मकसाध्या भावघटितसमुदायवति कालदिगादौ हेतोरवृत्त्या अतिव्याप्तेः परिग्रहः।

ननु साधनाधिकरणे येषां परस्परमैकाधिकरण्य तत्समुदायस्य विवक्षितत्वान्नाय दोष, भूतत्वमूर्तत्वायो· प्रत्येक साधनसमानाधिकर णत्वेपि साधनवति परस्परमैकाधिकरण्याभावेन तदुभयघटितकूटस्य लक्षणाघटकत्वात् तदेकतरघटितकूटस्यैव तथात्वात् तद्वति च हेतोः वृत्ते प्रतियोगितायां साध्यतावच्छेदकव्याप्यत्वविशेषण त्याज्यमेव, एवञ्च

विशिष्टस्यानतिरिक्तत्वेपि पृथिव्यन्यद्रव्यत्ववद्द्रव्यत्वादित्यादौ नोक्तरीत्याऽतिव्याप्ति सम्भवः, उक्तविशिष्टाभावाना साधनवति द्रव्यादावेकाधिकरण्याभावात् . एवं तादृशकूटाधिकरणपृथिव्यादिवृत्तित्वस्य द्रव्यवृत्तित्वादिना योऽभावः, तस्यापि तादृशवृत्तित्वत्वव्यापकप्रतियोगिताकयावदभावान्तर्गततया तद्वत्त्वविरहादप्युक्तहेतौ नातिव्याप्तिसम्भवः । नच द्रव्यवृत्तित्वत्वावच्छिन्नाभावप्रतियोगिताया आकाशादि वृत्तित्वसाधारणतया तादृशवृत्तित्वत्वाव्याप्यत्वात्र तादृशाभावो लक्षणघटक इति वाच्यम्, साधनसमानाधिकरणत्वस्य साध्याभावविशेषणतापक्षे प्रतियोगिताया तादृशवृत्तित्वत्वव्याप्यत्वविशेषणव्यावृत्त्यभावेन तादृशविशेषणस्य परित्याज्यत्वात् वह्निमान् धूमादित्यत्र आलोकाद्यवृत्तित्वरूपेण निर्वह्निवृत्तित्वाभावस्य प्रतियोगिताया आलोकादिनिष्ठपर्वतादिवृत्तित्वसाधारण्यं साधनसमानाधिकरणसाध्याभावकूटाधिकरणवृत्तित्वत्व मत्यव्यापकतयैव तादृशाभावव्यावर्तनात् साधनाधिकरणे साध्याभावत्वेन वृत्तेर्विवक्षितत्वादेव भूतत्वमूर्तत्वयोरुभयत्वेनाभावे साध्ये स्पर्शवदन्यत्वादौ द्रव्यवृत्तित्वाभावमादाय न दोषः. व्यासज्यवृत्तिधर्मानवच्छिन्नत्वेन प्रतियोगिताविशेषणात्पर्वतसंयुक्तत्वपर्वतान्यसंयुक्तत्वोभयत्वाद्यवच्छिन्नाभावस्य पर्वतासंयुक्तघटादौ वर्तमानस्य धूमादावसत्त्वेपि न क्षतिः । प्रतियोगितायां तादृशवृत्तित्वत्वव्याप्यत्वविशेषणेपि तादृशाभावमादायाऽव्याप्तेरावश्यकतया एतद्विशेषणस्य तद्विशेषणसत्त्वेप्यावश्यकत्वात् चरमाभावप्रतियोगितायां तादृशवृत्तित्वत्वव्याप्यत्वविशेषणत्यागे यत्किञ्चित्साधनाधिकरणवृत्तिसाध्याभावसमुदायाविवक्षणेपि प्रथमाभावप्रतियोगिताया साध्यतावच्छेदकव्याप्यत्वविशेषणं परित्याज्यमेव; पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ जलाद्यसमवेतत्वावच्छिन्नाभावकूटवत्त्वस्य साधनवत्यसत्त्वेपि तादृशाभावकूटवत्सामान्यादिवृत्तित्वत्वव्यापकप्रतियोगिताकयावदभावान्तर्गतानां पृथिव्यन्य-

[दी] किञ्च महाकालान्यत्वादिसाध्यके व्यभिचारिणि कालिकाविशेषण

---

वृत्तित्वावच्छिन्नाभावानामेव वृत्तिमद्वृत्तीनां हेतावसत्त्वेन अतिव्याप्त्यनवकाशात्। एवं सत्तावान् जातेरित्यादौ विशिष्टसत्तात्वावच्छिन्नाभावघटितगुणाद्यधिकरणसमवेतत्वाप्रसिद्धिनिबन्धना ऽव्याप्तिवारणायोपात्तसाध्यवद्वृत्तिसाध्यतावच्छेदकव्यापकसमानाधिकरणधर्मावच्छिन्नाभावभिन्नत्वरूपसाध्याभावविशेषणस्थले साध्याभावप्रतियोगितायां साध्यवद्वृत्त्यभावीयसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताभिन्नत्वं निवेश्य व्यधिकरणधर्मावच्छिन्नाभावीयगगनादिनिष्ठप्रतियोगिताभिन्नव्यधिकरणधर्मावच्छिन्नप्रतियोगिताप्रदायैव व्यधिकरणधर्मावच्छिन्नसाध्याभावसंग्रहे समानाधिकरणत्वस्य साध्यतावच्छेदकव्यापकत्वस्यानिवेशनीयतया अभावसाध्यकस्थले साध्यतावच्छेदकप्रमेयवृत्तिघटत्वाभावत्वावच्छिन्नप्रतियोगितायाः साध्यवद्वृत्त्यभावीयसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताभिन्नत्वाभावेन घटत्वाद्यभावव्यावर्तनात् साध्याभावप्रतियोगितायां साध्यतावच्छेदकव्यापकत्वविशेषणमपि परित्यजनीयम्। उक्तरीत्यापि पृथिव्यन्यद्रव्यत्ववद्द्रव्यान्यादित्यादौ घटान्यत्वविशिष्टद्रव्यत्वाभावकूटस्य हेतुमत्यसत्त्वेऽपि घटान्यवृत्तित्वत्वादिना गुणादिवृत्तित्वाद्यभावमादाय अतिव्याप्तिवारणायत्नतो दोषान्तरमाह — किञ्चेति।

केचित्तु — ननु स्ववृत्तिसाधनसमानाधिकरणसाध्याभावसमुदायाधिकरणयत्साधनाधिकरणं तद्वृत्तिसाध्याभावसमुदायाधिकरणं यद्यत्तत् तदेव साध्याभावसमुदायाधिकरणे त्वनेन विवक्षितम्, सद्धेतौ तादृशमेव जगदेव वह्न्यधिकरणमहानसादिनिष्ठानां निर्वह्निह्रदादिनिष्ठानां च धूमादसमानाधिकरणसाध्याभावानां व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकानां समुदायस्य साधनाधिकरणं तद्वृत्तितादृशसमुदायवत्त्वस्य महानसादौ साध्यवति साध्यशून्ये च ह्रदादौ सत्त्वात् अतो लक्षणसमन्वयः।

भूतत्वमूर्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यादौ तादृशं स्वं गगनं मनश्च; गगनवृत्तिभूतत्वघटितसाध्याभावसमुदायाधिकरणत्वस्य गगनरूपसाधनाधिकरण एव मनोवृत्तिमूर्तत्वघटितसाध्याभावसमुदायाधिकरणत्वस्य मनस्येव सत्त्वेन निरुक्तसाधनाधिकरणवृत्तिसाध्याभावसमुदायाधिकरणत्वस्य तत्र तत्र सत्त्वात्; स्ववृत्तिसाध्याभावे साधनसमानाधिकरणत्वविशेषणानुपादाने वह्न्यादिशून्यह्रदादिनिष्ठसमानाधिकरणधर्मावच्छिन्नसाध्याभावसमुदायाधिकरणत्वस्य साधनाधिकरणे असत्त्वात् साध्यवदेव तादृशं स्वम्, तद्वृत्तित्वाभावस्य वृत्तिमद्वृत्त्येहेतावसत्त्वात् अव्याप्तिः, अत तत्र तद्विशेषणप्रवेशः । प्रथमसमुदायपदाऽदाने भूतत्वमूर्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यादौ गगनं मनश्च न तादृश स्वम्, तद्वृत्तित्वघिकरणधर्मावच्छिन्नाभावाधिकरणमनोगगननिष्ठभूतत्वमूर्तत्वघटितसाध्याभाव–समुदायाधिकरणत्वस्य गगनमनसोः प्रत्येकमसत्त्वात्; किन्तु पृथिव्यादिचतुष्कमेव तथाविधं स्वम्, तद्वृत्तित्वाभावस्य हेतौ सत्त्वादतिव्याप्तिः, अतः तदुपादानम् । धूमवान् वह्नेरित्यादावपि पर्वतादि. स्ववृत्तिसाध्याभावकूटाधिकरणमहानसादिरूपसाधनाधिकरणवृत्तिसाध्याभावकूटाधिकरणतया जगदेव तादृशं स्वं स्यात्; अतो यत्र वृत्तिः तथाच पर्वतादिवृत्तिसाध्याभावाधिकरणं यत्साधनवदयोगोलकादेरपि तदन्तर्गततया तद्वृत्तिसमानाधिकरणधर्मावच्छिन्नाभावघटितसाध्याभावकूटस्य पर्वतादावसत्त्वात् तादृशं स्वं धूमादिशून्यमेवेति नातिव्याप्तिः । "यत्तत्साधनाधिकरण" मित्यनुक्त्वा "यदधिकरण" मित्येतावदुक्तौ भूतत्वमूर्तत्वान्यतराभाववान् स्पर्शवदन्यत्वादित्यादौ गगनादिवृत्तिसाध्याभावकूटाधिकरणं यथ पृथिव्यादेरपि तदन्तर्गततया तद्वृत्तिमूर्तत्वादिघटितकूटस्य गगनादावसत्त्वात् तादृशं स्वं न गगनादिकं भवेत्; अपि तु पृथिव्यादिकमेवेत्यतिव्याप्तिः, अतः साधनाधिकरणत्वनिवेशः; पृथिव्यादेस्तत्र साधनानाधि-

[दी] तद्विशेषेण हेतावतिव्याप्तिः, तादृशसाध्याभावसमुदायवति महाकाले तेन सम्बन्धेन वृत्तिमन्मात्रस्यैव वृत्तेः ।

---

करणत्वान्न दोषः । धूमवान् वह्नेरित्यादौ अयोगोलकादिनिष्ठव्यधिकरणधर्मावच्छिन्नसाध्याभावाधिकरणत्वस्य पर्वतादौ सत्त्वाज्जगदेव तादृशं स्यादिति चरमसमुदायपदोपादानम् । पूर्ववत्तादृशं यद्यत्तत्तावदन्यतमवृत्तित्वत्वव्यापकप्रतियोगिताकाभावो विवक्षणीयः, अतो नातिव्याप्तिरसम्भवो वा इत्यतो दोषान्तरमाह — किंचे तीत्याहुः ।

महाकाले ति । कालान्यत्वसाध्यके कालिकविशेषणताविशेषण हेतौ साध्यसामानाधिकरण्यविशेषणेन अतिव्याप्तिवारणसम्भवात् महाकालभेदसाध्यकानुसरणम् । यद्यपि महाकालत्वसाध्यके अतिव्याप्तिरसम्भवति, वृत्तिमन्मात्र एव महाकालातिरिक्तकालवृत्तित्वस्यापि सत्त्वात् तथापि साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभावघटितवक्ष्यमाणलक्षणे तत्तत्कालमात्रवृत्तितत्तत्कालावृत्तित्वावच्छिन्नाभावकूटाधिकरणाप्रसिद्ध्या नातिव्याप्तिः । साधनाधिकरणे सम्भवदेकाधिकरण्यकसाध्याभावसमुदायाधिकरणत्वस्य प्रयोजनान्तरानुरोधेन निवेशे तादृशाप्रसिद्धिविरहेऽपि साधनाधिकरणीभूतखण्डकालव्यक्तिविशेषावृत्तित्वावच्छिन्नाभावघटिततादृशकूटाधिकरणतत्कालवृत्तित्वाभावस्य तत्कालावृत्तौ वृत्तिमति वर्तमानस्य साधने अभावान्नातिव्याप्तिरित्यभिमतस्यैतेनेत्यादेरसङ्गतिरिति एकमात्रविपक्षकानुसरणम् । आदिपदान्महाकालत्वाभावादिपरिग्रहः । अत्रचिहेतौ साध्यसामानाधिकरण्यविशेषणेन अतिव्याप्तिवारणासम्भवात् व्यभिचारिणी ति । वृत्तिमत्त्वमात्रमत्र विवक्षितम्, तन्मात्रस्यैव व्यावर्तकत्वात् । समवायादिना द्रव्यत्वहेतुके तादृशसम्बन्धेन महाकालवृत्तित्वत्वावच्छिन्नाभावस्य वृत्तिमति घटत्वादौ वृत्तेर्हेतावव्युत्ते नातिव्याप्तिसम्भव इति कालिकसम्बन्धावच्छिन्नहेतुताकानुसरणम् । इद-

गुरुलक्षणम् ; ईश्वरज्ञानान्यत्वादिसाध्यके विषयितासम्बन्धेन हेतुमात्रे साध्याभावसमुदायवतीश्वरज्ञानादौ तेन सम्बन्धेन वस्तुमात्रस्यैव वृत्तेरति व्याप्तिर्द्रष्टव्या. एतेन वृत्तिमद्वृत्तित्वविशेषणस्थले वृत्तिमद्वृत्तित्ववृत्तित्वव्यापकप्रतियोगिताकत्वोभयाभावस्य वृत्तिमद्वृत्तित्वसाध्यवद्वृत्तित्वप्रतियोगिकत्वोभयाभावस्य वा निवेशे महाकालवृत्तित्वस्य समानाधिकरणधर्मावच्छिन्नाभावे चरमदण्डाभावेन उभयाभावसत्वेपि न निस्तारः । एवं यथाश्रुते घटत्वादिसाध्यके व्यभिचारिणि संयोगेन हेतौ साध्याभाववति संयुक्तमात्रस्यैव संयुक्तत्वादेतद्रूपत्वादिसाध्यके व्यभिचारिणि समवायेन हेतौ समवेतमात्रस्यैव एतद्रूपातिरिक्तसमवेतत्वादतिव्याप्तिरित्यपि द्रष्टव्यम् ॥

॥इति कूटघटितलक्षणम्॥

. अथ पुच्छलक्षणम् ।

साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नाभावकूटाधिकरणत्वस्य नानाविपक्षकस्थले अप्रसिद्धावपि साधनसमानाधिकरणतादृशाभावकूटाधिकरणत्वस्य नाप्रसिद्धिरिति साधनसमानाधिकरणत्वविशेषणपक्षे तादृशाभावकूटाधिकरणताभावमेव लक्षणं सम्यक्; साध्यतावच्छेदकव्यापकतापेक्षया साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकत्वस्य गुरुत्वेपि साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावघटितलक्षणे सत्तावान् जातेरित्यादौ विशिष्टसत्ताभावादिवारकोक्तविशेषणनिवेशे महागौरवात् ; विशिष्टस्यानतिरिक्तत्वे पृथिव्यन्यद्रव्यत्ववद्द्रव्यत्वादित्यादौ घटान्यत्वविशिष्टद्रव्यत्वाभावादेरपि साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्नप्रतियोगिताकतया उक्तदिशाऽतिव्याप्तिवारणाय तादृशाभावघटितलक्षणेपि साधनवति सम्भवदेकाधिकरण्यकतादृशाभावसमुदायस्यावश्यं विवक्षणीयतया पृथिवी द्रव्यत्वप्रकारकप्रमाविषयत्वादित्यादौ समवायसम्बन्धावच्छिन्नजलासमवेतत्वावच्छिन्नाभावघटितकूटाधिकरणं सामान्यादिवृत्तित्वाभाववत्त्वेप्यतिव्याप्तेर नवकाशात् साधनवति सम्भवदेकाधिकरण्यविवक्षामन्तरेणैव पृथिव्यन्यद्रव्य

[टी] एतेन साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपावच्छिन्न

---

रववत् द्रव्यत्वादित्यादौ घटान्यवृत्तित्वत्वावच्छिन्नाभावमादायातिव्याप्ति वारणे उक्तस्थलेपि तादृशाभावमादायातिव्याप्तिवारणसम्भवात् प्रतियोगि तावा साध्यतावच्छेदकव्याप्यत्वविशेषणं नोपादेयम् । यद्यपि साधन वति सम्भवदेकाधिकरण्यककूटनिवेशे द्रव्यत्वविशिष्टसत्ताभावद्रव्यान्यत्व विशिष्टसत्ताभावघटितकूटस्य सत्तावान् जातेरित्यादौ न लक्षणघटकता प्रसक्तिः, तथापि साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावनिवेशे तादृ शाभावैकतरव्यधिकरणधर्मावच्छिन्नाभावघटितकूटस्य तथात्वादव्याप्तिरिति तदुपेक्षेतिरीत्या सार्वभौमलक्षणपरिष्कारमपि हेतुतावच्छेदकसम्बन्धेन वृत्ति मदधिकरणमहाकालादिमात्रविपक्षकव्यभिचारिण्यतिव्याप्त्यापत्त्या निरा कुरुते– एतेने ति । अत्र प्रतियोगितायामवच्छिन्नान्तविशेषणव्यावृत्ति रभाववान् मेयत्वादित्यत्रैव वह्निमान् धूमादित्यत्रापि बोध्या, यादृशसाध्या भावकूटाधिकरणं साधनवत्तार्णतार्णदहनोभयाभावादिघटितकूटस्यापि तथा विधकूटतया तथाविधोभयादिमद्वृत्तिपदार्थे वर्तमानस्य तादृशकूटाधि करणवृत्तित्वाभावस्य हेतावसत्त्वात् । अत्र साध्यतावच्छेदकसम्बन्धावच्छि न्नत्वेनापि प्रतियोगिता विशेषणीया, अन्यथा वह्निमान् पर्वतवह्न्य वयवसंयोगादित्यत्र संयोगसम्बन्धावच्छिन्नवह्न्यभावसमवायसम्बन्धावच्छि न्नवह्न्यभावयो सम्भवदेकाधिकरण्याभावेन तदुभयघटितकूटस्य लक्षणा घटकत्वात् अतिव्याप्तिविरहेपि वह्निमान् धूमादित्यादौ साध्यतावच्छेद कसम्बन्धातिरिक्तसम्बन्धावच्छिन्नाभावकूटस्य उक्तक्रमेण लक्षणघटकतया त दृशि वह्न्यवयवाद्यतिरिक्ते हेतोर्वृत्तेरसम्भवापत्ते । व्यापकतापि साध्य तावच्छेदकसम्बन्धेन, अन्यथा समवायेन वह्निसंयोगे साध्ये संयोगेन साध्यव्यापकस्य वह्नेस्समवायसम्बन्धावच्छिन्नाभावादिघटितकूटाधिकरणं न

[दी] प्रतियोगितावच्छेदकावच्छिन्नयद्वृत्तित्वसमानाधिकरणयावदभावाधिकरण वृत्तित्वाभावो यावन्तः वृत्तिमद्वृत्तयस्तद्वत्त्वं व्याप्तिः केवलान्वयिनि संयोगाद्यभावस्याभावात्संयोगादेः न व्याप्यवृत्तित्व । एवं साध्यस्य गुणसामान्यस्याभावो द्रव्यत्वाधिकरणे

---

द्रव्यत्वातिरिक्तवृत्तौ सद्धेतावव्याप्त्यापत्तेः, इत्थञ्च संयोगेन सम्बन्धेन व्यापकत्वाप्रसिद्ध्यर्थं व्यापकतावटकान्योन्याभावे प्रतियोगिव्यधिकरणत्वविशेषणस्य आवश्यकतया व्याप्यवृत्तिपदसार्थक्यमिति केचित् ।

वस्तुतस्तु येन सम्बन्धेन व्यापकता तेनैवाभावो ग्राह्य, सा च साध्यतावच्छेदकसम्बन्धस्य विशिष्य निवेशे अवच्छिन्नवृत्तिकान्यत्वरूप व्याप्यवृत्तित्वनिवेशे संयोगेन धूमादिसाध्यके तत्सम्बन्धावच्छिन्नधूमत्वावच्छिन्नाभावस्य धूमवत्त्वावच्छिन्नवृत्तिकतया व्यधिकरणधर्मावच्छिन्नाभावमात्रस्य व्याप्यवृत्तित्वेन अतिव्याप्त्यापत्त्या अनवच्छिन्नवृत्तिकत्वरूपव्याप्यवृत्तित्वस्यैव निवेशनीयतया "एव" मित्यादिपङ्क्त्युत्तरान्ते दर्श्यमाणत्वात् , अन्योन्याभावघटितव्यापकतानिवेशाच्च व्याप्यवृत्तिपद सार्थक्यम् ।

संयोगाभावसाध्यकस्थले संयोगघटितवृत्त्यधिकरणतायाः द्रव्यमात्रे सत्त्वात् तद्वृत्तिहेतावव्याप्तिवारणरूपं तत्प्रयोजनमाह — केवलान्वयिनि इति । एतेन तत्साध्यके द्रव्यवृत्तेस्सद्धेतुत्वमक्षतमिति सूचितम् ।

गुणवान् द्रव्यत्वादित्यादौ गुणाद्यनवच्छिन्नवृत्तिकगुणाद्यभाववति नित्यद्रव्यातिरिक्ते हेतोर्वृत्त्या अव्याप्तिवारणरूपमनवच्छिन्नवृत्तिकत्वरूपव्याप्यवृत्तित्वविशिष्टाभावनिरूपिताधिकरणतानिवेशनफलमाह — एवमिति । साध्याभावे उत्पत्तिकालावच्छेदेन द्रव्यवृत्तित्वकथनं द्रव्यत्वे तद्वद्वृत्तित्वाभावासत्त्वेनाव्याप्तिप्रसङ्गसूचनाय, व्याप्यवृत्ति रित्यत्र द्रव्यत्वाधिकरण इत्यनुपज्यते, इति व्याख्यानमसत्, अनवच्छिन्नवृत्तिकत्व-

[दी] उत्पत्तिकालावच्छेदेन वर्तमानोपि न व्याप्यवृत्तिः, उक्तरूपावच्छिन्नप्रतियोगिताकाः क्वचिदप्रसिद्ध्यादिसम्पादकाः पुनरभावाः न हेतुत्वाभिमतसमानाधिकरणाः

---

रूपव्याप्यवृत्तित्वनिवेशे संयोगी घटादित्वप्रोक्तरीत्या ऽव्याप्तेर्वारणाय साधनवति व्याप्यवृत्तित्वस्यावश्यनिवेशनीयतया तत्र एवाव्याप्तप्रसक्तेः साधनवति व्याप्यवृत्तित्वपर्यन्तनिवेशनप्रयोजनपरतया एतत्पङ्क्तिव्याख्या न साधीयसी; व्याप्यवृत्तित्वविशिष्टाधिकरणत्वाप्रवेशे संयोगी सत्त्वादित्यत्र गुणादौ व्याप्यवृत्तेः संयोगाभावस्येव द्रव्यत्वाद्यभावस्यापि लक्षणघटकतया जगतः साध्याभावकूटानधिकरणतयातिव्याप्तेर्गगनवकाशोपि धूमवान् वह्नेरित्यादौ साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकव्यापकतावच्छेदकावच्छिन्नाभावकूटाधिकरणतया विश्वस्मिन् सत्त्वादति व्याप्तेर्दुर्वारतया तन्निवेशनस्यावश्यकतया तावताप्युक्ताव्याप्तिवारणसम्भवात्; तस्माद्व्याप्यवृत्तित्वमवच्छिन्नवृत्तिकान्यत्वमत्राभिमतम्; अतोपि साध्यतावच्छेदकव्यापकप्रतियोगिताकाभावापेक्षा, तन्निवेशे साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्यैव निवेशनीयतया संयोगेन साध्यतायां व्यभिचारिणि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्यैव संयोगेन द्रव्याभावस्यावच्छिन्नवृत्तिकान्यतया अतिव्याप्तेः, तन्निवेशनस्यैव दैशिककालिकाव्याप्यवृत्तिसाध्यभेदेन स्थलद्वये व्यावृत्तिरभिहितेति सारम् ।

स्वसमानाधिकरणत्वनिवेशनप्रयोजनमाह – उक्तरूपे ति । साध्यतावच्छेदकावच्छिन्नव्यापकतावच्छेदकरूपेत्यर्थः । अप्रसिद्ध्यादी ति । सत्तावान् जातेरित्यादौ सत्तात्वाद्यवच्छिन्नाभावकूटाधिकरणे हेतुतावच्छेदकसम्बन्धेन वृत्त्यप्रसिद्धेस्सम्पादका रूपाभावादिसाध्यके रूपाद्यात्मकाभावकूटाधिकरणाप्रसिद्धिसम्पादकाः, सम्पन्नैतदधिकरणस्यापि सत्त्वाभावस्तोगाधिकरणत्वाविवक्षणे सत्तान्यपृथिवीसमवेतशून्यं वायुत्वादित्यादौ

[टी] उक्तसमुदायाधिकरणवृत्तित्वतदभाववृत्तिमद्वृत्तित्वानि पूर्वोक्तरीत्या प्रत्येतव्यानीत्यादिकमपास्तम् ।

---

आदिपदग्राह्यया अतिव्याप्तेः सम्पादका बोध्याः । पूर्वोक्तरीत्ये ति । समुदायाधिकरणवृत्तित्वं हेतुतावच्छेदकसम्बन्धेन, तदभाव स्तादृश वृत्तित्वत्वव्यापकप्रतियोगिताकः; हेतुतावच्छेदकसम्बन्धेन वृत्तिमत्त्वं लक्षण घटकं बोध्यमित्यर्थः । अपास्त मिति । नच सार्वभौममते ; सामानाधिकरण्यस्याव्याप्यवृत्तित्वम्, साध्याभावकूटवन्महाकालवृत्तित्वस्य समानाधिकरणधर्मावच्छिन्नाभावोपि सामानाधिकरण्यानिरूपकखण्डकालाद्यवच्छेदेन घटादिरूपवृत्तिमति वर्तत एवेति महाकालान्यत्वसाध्यके नातिव्याप्ति सम्भव इति वाच्यम् ; तथा सति वक्ष्यमाणावपि स्वावयवावच्छेदेन निर्धूमसंयुक्तत्वाद्यभावसत्त्वेन धूमवान् वह्नेरित्यादावतिव्याप्तेरुक्तस्थले अतिव्याप्तिवारणस्य सुदूरपराहतत्वात् ।

यत्तु- हेतुतावच्छेदकसम्बन्धेन हेत्वधिकरणसामान्यावच्छेदेन तद्वत्त्वस्य विवक्षितत्वान्नातिव्याप्तिः, व्यभिचारनिरूपकाधिकरणावच्छेदेन हेतौ तद्वत्त्वविरहादिति ; तन्न; एवं सति स्वावयवावच्छेदेन घटादिवृत्तेः समानाधिकरणधर्मावच्छिन्नजगत्संयुक्तत्वाद्यभावस्य पर्वतत्वावच्छेदेन धूमादावसत्त्वादसम्भवापत्तेः; वृत्तिमद्वृत्तिपदेन हेतुतावच्छेदकसम्बन्धेन यस्य यदधिकरणं तदवच्छेदेन तद्वृत्तित्वविवक्षायामपि व्याप्यवृत्तेरवच्छेदकानभ्युपगमे व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकस्य साध्याभावकूटाधिकरणवृत्तित्वाभावस्याधिकरणानवच्छिन्नतया असम्भवस्य दुर्वारत्वात् , यदि च वृत्तिमत्त्वनवच्छिन्नवृत्त्यो यावन्त स्तादृशाभावाकूटाधिकरणवृत्तित्वाभ्यां अनवच्छिन्नतद्वत्त्वं व्याप्तिरित्युच्यते; तदा सामानाधिकरण्यस्याव्याप्यवृत्तितापक्षेपि न दर्शितदोषनिरासस्सम्भवति, समानाधिकरण

॥ अथ व्यधिकरणधर्मावच्छिन्नाभावखण्डनम् ॥

मूले—* प्रतियोग्यवृत्तिश्च धर्मो न प्रतियोगितावच्छेदक इति व्यधिकरणधर्मावच्छिन्नाभावनिराकर्तुं प्रतिज्ञावाक्यम् , तत्र धर्मस्य मनुपादेयम् , अवृत्तेरपि प्रतियोगितावच्छेदकत्वस्य निराकर्तव्यत्वात् तत्त्वे साधकाभावादिति हेतुरूह्य । पक्षतावच्छेदके साध्यतावच्छेदके च सामान्यत प्रतियोगिप्रतियोगित्वयोर्न प्रवेश , सर्वेषामेव किञ्चिद् भावप्रतियोगिनि सम्बद्धतया किञ्चिदभावप्रतियोगितावच्छेदकतया च विशिष्टपक्षाद्यप्रसिद्धे , किन्तु विशिष्य वाच्यत्वत्वादिना, तथाच वाच्यत्वाद्यवृत्तित्वावच्छिन्ने वाच्यत्वादिनिष्ठप्रतियोगितानवच्छेदकत्वं साधनीयम् , समूहालम्बनानुमितिरुद्देश्या, तत्तदभावीयप्रतियोग्यवृत्तित्वावच्छिन्ने तत्तदभावप्रतियोगितानवच्छेदकत्वसाधनं न सम्यक् , समानियताभाववैक्य मते समवायित्वादिना वाच्यत्वाद्यभावस्य घटत्वाद्यवच्छिन्नघटाद्यभावाभिन्नतया समवायिघटादीनामपि तथाविधवाच्यत्वाद्यभावप्रतियोगितया तदवृत्तिसमवायित्वादेर्वाच्यत्वाद्यभावीयप्रतियोग्यवृत्तिताया दुर्घटत्वात् प्रतियोगिता विशिष्योपादाय तत्तत्प्रतियोगितावदवृत्तित्वावच्छिन्ने तत्तत्प्रतियोगितावच्छेदकत्वाभावसाधनमपि हेयम् , वाच्यत्वादिनिष्ठाया प्रसिद्धसमानाधिकरणद्वित्वाद्यवच्छिन्नाभावप्रतियोगिताया उपादाने सिद्धसाधनात् , सौन्दडोपाध्यायैरपि व्यधिकरणसमवायित्वादिधर्मस्य समानाधिकरणधर्मावच्छिन्नप्रतियोगितावच्छेदकत्वानङ्गीकारात् , व्यधिकरणधर्मावच्छिन्नायाश्च प्रतियोगिताया उभयवाद्यसिद्धतया विशिष्योपादानासम्भवात् ।

केचित्तु— विशिष्य समवायित्वादिकं पक्षतावच्छेदकीकृत्य वाच्यत्वादिनिष्ठप्रतियोगितानवच्छेदकत्वं साधनीयम् , साधनप्रतियोगितावदवृत्तित्वमेव हेतु , यो यद्वृत्ति स तन्निष्ठप्रतियोगितानवच्छेदक इति सामा

च्छिन्नविषयकं ज्ञानं हेतुः तथा समवायितया वाच्यत्वं नास्तीत्यादि बुद्धेर्वाच्यत्वादिनिष्ठप्रतियोगिताया समवायित्वावच्छिन्नत्वानवगाहित्वे समवायित्वादिना वाच्यत्वावच्छिन्नधर्मिकज्ञानं हेतुतयाऽपेक्ष्यते, तथाच वाच्यत्वं न समवायीति विशेषदर्शनदशायामप्यनुभूयमाना तदाकारा प्रतीतिः कथमुपपद्यताम् ? तत्र तस्या वाच्यत्वावच्छिन्नप्रतियोगिकसमवायित्वाभावावगाहित्वोपगमे गत्यैव तथात्वमुपपद्यतामिति गत्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वेनेत्यभिप्राय इति भिन्नायानुसारिण्यास्त्वाम्, तत्रेयमनुपपत्तिरवतरति तद्धर्मावच्छिन्नत्वनिष्ठप्रतियोगिताकाभावबुद्धौ तद्धर्मप्रकारकतज्ज्ञानत्वेन हेतुत्वासम्भवः, घटत्वेन यत्किञ्चिद्घटज्ञानादपि यावद्घटप्रतियोगिकसामान्याभावबुद्ध्युत्पत्त्या व्यभिचारात्, सम्भवेऽपि वा दर्शितविशेषदर्शनकाले निष्ठप्रतावच्छेदकवाच्यत्वादिधर्मिकसमवायित्वादेर्भानसम्भवेन व्यधिकरणधर्मावच्छिन्नाभावप्रतीतिनिर्वाहात् तादृशकारणताया अकिञ्चित्करत्वम्, नच वह्नित्वधर्मितावच्छेदककमहानसीयत्वप्रकारकबुद्धिं विना विशुद्धवह्निमहानसीयत्वप्रकारकज्ञानसत्त्वेऽपि महानसीयवह्नित्वावच्छिन्नाभावप्रत्यक्षानुत्पत्त्या तद्धर्मसमानाधिकरणतद्धर्मावच्छिन्नप्रतियोगिताकाभावबुद्धौ तद्धर्मावच्छिन्नधर्मिकतद्धर्मप्रकारकज्ञानत्वेन हेतुता वाच्येति वाच्यत्वत्वावच्छिन्नधर्मिकसमवायित्वप्रकारकज्ञानं विना न समवायित्वावच्छिन्नवाच्यत्वत्वसमानाधिकरणप्रतियोगिताकाभावभानसम्भव इति वाच्यम् महानसीयवह्नित्वाद्यवच्छिन्नप्रतियोगिताया द्रव्यत्वादेरपि सामानाधिकरण्यादुक्तकार्यकारणभावोपगमे द्रव्यत्वाद्यवच्छिन्नधर्मिकमहानसीयत्वप्रकारकज्ञानस्यापि तादृशप्रतियोगिताकाभावबुद्धावपेक्षणीयत्वापत्तेः ।

अथ तद्धर्मवद्वृत्तित्वेन भासमानप्रतियोगित्वे तद्धर्मावच्छिन्नत्वावगाहिन्यामभावबुद्धौ तद्धर्मावच्छिन्नधर्मिकतद्धर्मप्रकारकज्ञानत्वेन हेतुता, महानसीयवह्निर्नास्तीत्यत्र च वह्नित्वावच्छिन्ननिष्ठत्वेन रासभत्वतया

भावसमानप्रतियोगित्वे महानसीयत्वावच्छिन्नत्वं भासते, स्वावच्छिन्नवह्निवृत्तिप्रतियोगिताकत्वस्य अभावांशे प्रतियोगिविशेषणतापन्नमहानसीयत्वस्य सम्बन्धघटकत्वादिति तत्र वह्नित्वावच्छिन्नधर्मिकमहानसीयत्वप्रकारकज्ञानस्यापेक्षा, न तु धर्मान्तरावच्छिन्नधर्मिकस्य, धर्मान्तरविशेषितवह्निवृत्तित्वेन तत्र प्रतियोगिनाऽभानादितिचेत्, तर्हि प्रतियोगितावच्छेदकप्रकारकज्ञानमन्तरेणाप्यभावप्रत्यक्षसामान्यापत्तिः, प्रत्यक्षविशेष एव तद्धेतुतायाः स्वीकृतत्वात् एवमप्यनतिप्रसङ्गेन प्रतियोगिविशेषिताभावबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानमुद्रया प्रतियोगितावच्छेदकप्रकारकज्ञानस्य हेतुत्वादेव निर्वाहे स्वतन्त्रतद्धेतुताया निष्प्रमाणत्वापत्तेश्च अस्तुवैतादृशरीत्यैव हेतुहेतुमद्भाव, तथापि समवायितया वाच्यत्वं नास्तीत्यत्र वाच्यत्वत्वसामानाधिकरण्यविशेषितत्वावच्छिन्नप्रतियोगिताया एव समवायित्वसंसर्गघटकतया भानोपगमसम्भवेन वाच्यत्वत्वावच्छिन्नधर्मिकसमवायित्वप्रकारकज्ञानस्य तत्रानपेक्षणीयत्वमनुपपन्न इति ।

अत्रेदं समाधानमवधेयम्, तदुभयधर्मावच्छिन्नप्रतियोगिताकाभावबुद्धौ तदुभयैकतरधर्मावच्छिन्नधर्मिकतदितरप्रकारकज्ञानत्वेन हेतुता, समवायितया वाच्यत्वाभावस्य व्यधिकरणसमानाधिकरणयोः समवायित्ववाच्यत्वत्वयोरुभयोरेव प्रतियोगितावच्छेदकत्वपर्याप्तिरवश्यमङ्गीकार्या, समवायित्वमात्रस्य प्रतियोगितावच्छेदकत्वे वाच्यत्वत्वप्रकारकज्ञानमन्तरेणापि तादृशाभावप्रतीत्यापत्तेः, अत्र समवायितया वाच्यत्वं नास्तीति प्रतीत्या समवायित्ववाच्यत्वत्वोभयपर्याप्तप्रतियोगितावच्छेदकत्वानवगाहने तस्याः समवायिवाच्यत्ववादिदामिति भ्रमविरोधित्वानुपपत्तेश्च, न चाति समवायितया प्रमेयत्ववाच्यत्वोभयं नास्तीत्यादिनिश्चयव्यावृत्तेन तदुभयांशे प्रतियोगितावच्छेदकतापर्याप्त्यवगाहिनिश्चयत्वेनैव प्रतिबन्धकत्वात् ।

न्यतो व्याप्तिप्रदर्शकः प्रतियोग्यवृत्तित्वे ति ग्रन्थः ; वीप्साद्यभावेपि प्राथम्येन व्याप्तेर्लाभसम्भवात् ; वाच्यत्वाद्यवृत्तिधर्ममात्रस्यैव व्यधिकरणतया वाच्यत्वादिनिष्ठप्रतियोगितायां तन्मते अवच्छेदकतया यद्यप्यत्रान्वयदृष्टान्तदुर्भिक्षम् , तथापि व्यतिरेकेण वाच्यत्वादिनिष्ठाभयत्वादिकमेव दृष्टान्तस्सम्भवतीत्यदोष । अथवा – यो यद्वदवृत्तिः, स तदनवच्छेदक इति सामान्यव्याप्तौ कारणत्वादिव्यधिकरणः कारणत्वाद्यनवच्छेदक एवान्वयेन दृष्टान्तः, प्रतियोगितावच्छेदकत्वाविषयतावच्छेदकत्वोभयसाधारणावच्छेदकतात्वस्यैक्ये भ्रमविषयता, व्यधिकरणतदवच्छेदकरजतत्वादौ उक्तसामान्यव्याप्तेर्भङ्गवारणाय विषयतान्यत्वेन यत्पदार्थो विशेषणीय इत्याहुः । अथ कालिकादिसम्बन्धेन घटादिवृत्तिघटत्वादेः समवायादिना घटादिनिष्ठप्रतियोगितावच्छेदकत्वखण्डनाय तत्तत्सम्बन्धेन प्रतियोग्यवृत्तित्वम् ; तत्तत्सम्बन्धेन प्रतियोगितावच्छेदकत्वाभावसाधने पक्षतावच्छेदकतया हेतुतया वा विवक्षणीयम् , तथाच समवायादिसम्बन्धेन वाच्यत्वादिवृत्तित्वाप्रसिद्ध्योक्तरीत्या समवायादिसम्बन्धावच्छिन्नघटत्वाद्यवच्छिन्नवाच्यत्वाद्यभावखण्डनानुपपत्तिः. “ प्रतियोग्यवृत्तित्व ” मित्यनेन प्रतियोगिनिष्ठावच्छेदकताघटकसम्बन्धावच्छिन्नाभावप्रतियोगित्वमेव विवक्षणीयम् , तथाच घटत्वादेरेव वाच्यत्वादिनिष्ठसमवायादिसम्बन्धावच्छिन्नाभावप्रतियोगितया नाप्रसिद्धिरिति वाच्यम् , अव्याप्यवृत्तेः संयोग्यभावप्रतियोगितावच्छेदकस्य प्रतियोगिनिष्ठाभावप्रतियोगितयोक्तधर्मस्य पक्षतावच्छेदकत्वे बाधस्य, हेतुत्वे च व्यभिचारस्य दुर्वारत्वात् . प्रतियोगिनिष्ठभेदप्रतियोगितायामवच्छेदकताघटकसम्बन्धेनावच्छेदकत्वस्य विवक्षणे व्यधिकरणसंयोगादिसम्बन्धेन घटत्वाद्यवच्छिन्नवाच्यत्वाद्यभावनिराकरणानुपपत्तिः; तेन सम्बन्धेन घटत्वादे. भेदप्रतियोगितायामवच्छेदकत्वस्य वादिनोरननुमतत्वात् - एव घटत्वादौ समवायादिसम्बन्धेन वाच्यत्वादिनिष्ठप्रतियोगितावच्छेदकत्वस्याभावः प्रतियोग्यप्रसिध्या साधयितु-

तद्विशिष्टज्ञानस्याभावधीहेतुत्वात्. अन्यथा तन्निर्विकल्पकादपि घटोनास्तीति बुध्यापत्तेः ।

---

[दी] तद्विशिष्ट ति । विशेषणतावच्छेदकविशिष्टज्ञानस्य विशिष्टवैशिष्ट्यमत्यक्षहेतुत्वात् ।

---

प्रशक्यः, मैवम् ; स्वप्रतियोगिकत्व स्वानुयोगिकत्वोभयाभाववद्यादृशसम्बन्धसामान्यको यः स स्वनिष्ठत्वतत्सम्बन्धावच्छिन्नत्वोभयाभाववत्तन्निष्ठप्रतियोगितावच्छेदकतासामान्यक इत्यर्थविवक्षायामेव सामञ्जस्यात्, संयोगादिसम्बन्धसामान्ये घटत्वादिप्रतियोगिकत्ववाच्यत्वाद्यनुयोगिकत्वोभयाभावसत्त्वात् प्रथमस्वपदेन घटत्वाद्युपादानस्य मतद्वय एव सम्भवात् तत्र स्वनिष्ठत्वसंयोगादिसम्बन्धावच्छिन्नत्वोभयाभाववद्वाच्यत्वादिवृत्तिप्रतियोगितावच्छेदकतासामान्यकत्वसाधनेनोद्देश्यसिद्धि ।

ननु समवायितया वाच्यत्वं नास्तीत्याकारकः समवायित्वादेर्वाच्यत्वादिनिष्ठप्रतियोगितावच्छेदकत्वावगाही प्रत्यय एव मानमित्युक्तहेतोरसिद्ध्याशङ्कायामाह – तद्विशिष्टज्ञानस्ये ति । अत्र च प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य अभावलौकिकप्रत्यक्षत्वावच्छिन्नहेतुत्वादित्यर्थः । यद्यपि अन्यथा घटादिनिर्विकल्पकानन्तरं घटाभावप्रत्यक्षापत्ते रिति मूलदर्शितयुक्त्या वाच्यत्वं न समवायीति विशेषदर्शनप्रतिबध्यवाच्यत्वत्वावच्छिन्नधर्मिकसमवायित्वप्रकारकज्ञानपर्यन्तापेक्षा समवायित्वावच्छिन्नवाच्यत्वाभावप्रत्यक्षे नायाति, तथापि स्वतन्त्रमहानसीयत्ववह्नित्वप्रकारकज्ञानान्महानसीयवह्निर्नास्तीति बुद्ध्यनुदयात् महानसीयवह्निर्नास्तीत्यभावबुद्धौ महानसीयत्वावच्छिन्नत्वेन वह्न्यादिनिष्ठप्रतियोगितावगाहिन्यां यथा महानसीयत्वप्रकारेण वह्नित्वावच-

[दा] अभावप्रत्ययो हि घटत्वादिविशिष्टस्य घटादेः प्रतियोगित्वमवगाहमानो विशेषणस्यापि घटत्वादेः तदवच्छेदकत्वमवगाहते,

---

स्तीत्यादिप्रतीतेर्व्यधिकरणधर्मावच्छिन्नाभावावगाहित्वासम्भव इत्यर्थपरतया तद्व्याख्यानमेवोचितम्, न तु विशिष्टवैशिष्ट्यबोधहेतुतामुपजीव्य फलस्य हेत्वन्तरपरतयेत्याशयेनाह — (दीधितौ) विशेषणतावच्छेदके ति। अथ भाव वाच्यत्वं समवायीति ज्ञानमन्तरेण समवायिवाच्यत्ववानयमिति विशिष्टवैशिष्ट्यबोधानुत्पत्त्या वाच्यत्वत्वावच्छिन्ननिरूपितत्वेन भासमानवैशिष्ट्ये समवायित्वावच्छिन्ननिरूपितत्वावगाहिनि ज्ञाने वाच्यत्वत्वावच्छिन्नप्रकारकसमवायित्वादिप्रकारकज्ञानत्वेन हेतुताकल्पनमावश्यकम्, समवायिवाच्यत्वं नास्तीति व्यधिकरणधर्मावच्छिन्नाभावबुद्धेरपि वाच्यत्वत्वावच्छिन्नीयत्वेन भासमान अनुयोगितारूपवैशिष्ट्ये समवायित्वावच्छिन्नीयत्वावगाहितया तत्र तादृशज्ञानमवश्यापेक्षणीयमिति।

ननु वैशिष्ट्यांशे वाच्यत्वत्वनिष्ठधर्मितावच्छेदकतानिरूपकविशेषणतापन्नसमवायित्वावच्छिन्नप्रतियोगिताकत्वावगाहिबुद्धावेव तदवच्छिन्नवाचकसमवायित्वप्रकारकज्ञानं हेतुः व्यधिकरणधर्मावच्छिन्नाभावबुद्धौ च वाच्यत्वत्वावच्छिन्ने समवायित्वस्य विशेषणत्वं नापेयते, अपि तु तद्विशेषणतापन्नस्यैव तस्य स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाऽभावांशे विशेषणत्वमुपेयते वाच्यत्वसंसर्गतावच्छेदकतयैव वा तथाविधतदवच्छिन्नत्वस्य प्रतियोगितांशे भानमुपेयत, तथा च तत्र नोपदर्शितज्ञानापेक्षेत्याशङ्का परिजिहीर्षुर्भावं व्याचष्टे — अभावप्रत्ययो हि ति। विशेषणस्य — प्रतियोगिघटादिनिरूपितविशेषणतापन्नस्य घटत्वादेः। प्रतियोगितावच्छेदकत्वमवगाहते — प्रतियोगितया भासमानघटादिनिरूपितविशेषणतावच्छिन्ना या स्वावच्छिन्नप्रतियोगिताकत्वसंसर्गतावच्छि

[दी] न स्वातन्त्र्येण, घटो नास्तीत्येव प्रतीते तदिहाभावप्रत्ययो यदि व्यधिकरणधर्मेणावच्छिन्नं प्रतियोगिनं नावगाहते, नावगाहत एव तदा तस्यापि प्रतियोगितावच्छेदकत्वम् ।

---

त्ता घटत्वादिनिष्ठप्रकारता तच्छालिनी भवतीति यावत् । **न तु स्वातन्त्र्येण** — "प्रतियोग्यविशेषणत्वेन घटत्वादि प्रतियोगितावच्छेदकत्वमवगाहते" इत्यनुषङ्गेणान्वयः । तादृशसम्बन्धावच्छिन्नघटत्वादिनिष्ठप्रकारता प्रतियोगिनिरूपितप्रकारतानवच्छिन्ना न भवतीत्यर्थः । **घटो नास्तीत्येवे** ति । अभावांशे स्वातन्त्र्येण घटत्वादिवैशिष्ट्योल्लेखरहितायाः एवेत्यर्थः । **प्रतीते** — 'अनुभवा' दिति शेषः । एतावता किमायातमित्यत आह — **तदिहे** ति । **अवच्छिन्नम्** — विशेषितम् । **तस्यापि प्रतियोगितावच्छेदकत्वम्** — तस्य प्रतियोगितावच्छेदकत्वमपि तथा च मानाभावेन व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वासिद्धिरिति भावः ।

अथ व्यधिकरणधर्मस्य प्रतियोगिविशेषणतयैव व्यधिकरणधर्मावच्छिन्नाभावबुद्धौ भानमुपेयते, नचैवं तादृशबुद्धेः समवायित्वादिरूपविशेषणतावच्छेदकप्रकारकवाच्यत्वादिज्ञानजन्यतावच्छेदकाक्रान्ततया तादृशज्ञानं विना व्यधिकरणधर्मावच्छिन्नाभावबुद्ध्यनुपपत्तिरिति वाच्यम्, भ्रमात्मकतादृशज्ञानदशायामेव तद्बुद्ध्यभ्युपगमात् । विशेषदर्शनदशायामपि आहार्यतत्प्रकारकज्ञानादेव तद्बुद्धिसम्भवात् । अनाहार्यस्यैव विशेषणतावच्छेदकप्रकारकज्ञानस्य विशिष्टवैशिष्ट्यप्रत्ययहेतुत्वे विशेषदर्शनकालीनायाः समवायितया वाच्यत्वं नास्तीत्यादिबुद्धेरगत्या वाच्यत्वाद्यधिकरणकसमवायित्वाद्यभावावगाहित्वमुपेयते, वाच्यत्वं समवायीत्यादिभ्रमानन्तरं समवायिवाच्यत्वं नास्तीत्याकारकप्रत्यय एव व्यधिकरणधर्मस्य

## गवि शशशृङ्गं नास्तीति प्रतीते रसिद्धेः ।

अथावगाहते' तर्हि भ्रम एव , नन्व तर्तोऽर्थसिद्धिरिति भाव ।

---

प्रतियोगितावच्छेदकत्वे मानमान्तात् , तत्र तदवगाहितया सर्वानु भवसिद्धत्वेनापह्नोतुमशक्यत्वात् । तादृशप्रतीतिवन्यत्वे समवायित्वाभावान गाहित्वोपगमे तत्पूर्वं वाच्यत्व समवायीति भ्रमापेक्षानुपपत्तेरित्याशयेना शङ्कते अथावगाहत इति । समाधत्ते तर्हि भ्रम एवे ति । व्यधिकरण धर्मस्य प्रतियोगितावच्छेदकत्वांशेऽपि भ्रम एवेत्यर्थ । वैशिष्ट्यभान एव अवच्छेदकताया भानादवच्छेदकताया वैशिष्ट्यनियततया तद्बाधे तस्या अपि बाधादिति भाव । नचैव गवि शशशृङ्गं नास्तीति प्रतीतेरसिद्धे रिति मूलासङ्गति, तादृशप्रतीते शृङ्गांशे शशीय त्वावगाहित्वानभ्युपगमे शशीयत्वे शृङ्गनिष्ठप्रतियोगितावच्छेदकत्वावगाह नासम्भव, तदवगाहित्वे भ्रमत्वमित्युभयथापि व्यधिकरणधर्मावच्छिन्ना भावासाधकत्वात् तादृशप्रतीतिनिराकरणस्यानुपयुक्तत्वादिति वाच्यम् , अभ्रान्तानामपि गवि शशशृङ्ग नास्तीति व्यवहारमूलप्रतीतिसत्त्वेनोक्त नियमस्यैव असिद्धया व्यधिकरणधर्मावच्छिन्नाभावसिद्धिर्निष्प्रत्यूहैव, तादृशप्रतीते शशशृङ्गाधिकरणकत्वशशीयत्वाभावावगाहित्वोपगमे तस्या गवाधिकरणकाभावावगाहित्वानुभवविरोध इत्याशङ्कामुत्थाप्याभ्रान्तपुरुषीय गवाधिकरणकाभावावगाहितादृशाभावप्रतीतिनिराकरणपरतया तद्ग्रन्थस्या वतारणीयत्वात् । नन्वभ्रान्तानां गवि शशशृङ्ग नास्तीति प्रतीतिर्माभूत्, शशशृङ्ग नास्तीति प्रतीतिर्नापह्नोतु शक्यते, सर्वेषामेव तथाविध व्यवहारदर्शनादित्याशङ्कया शशशृङ्ग नास्तीत्यादिमूलावतारो बोध्य ।

# शशशृंगं नास्तीति च शशे शृंगाभाव इत्यर्थः॥

॥ इति तत्त्वचिन्तामणौ व्यधिकरणधर्मावच्छिन्नाभाव विचारः ॥

---

यद्यपि ' शशशृङ्गं नास्ती ' ति शब्देन शशे शृङ्गाभाव इत्याकारकः शाब्द-बोधो न शक्यते जनयितुम्, अनुयोगिवाचकपदोत्तर सप्तमीविरहेण निराकांक्षत्वात्; तथापि पदार्थोपस्थित्यादिमूलकतादृशमानसबोधजननेच्छया व्युत्पन्नानां तथा प्रयोग इत्याशय. ।

ननु घटत्वेन घटो नास्तीत्याकारकस्याभावप्रत्ययस्यानुभविकं तया प्रतियोगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकत्वमभावप्रत्ययो ऽवगाहत इति न नियमः, तादृशप्रतीत्या स्वातन्त्र्येण भासमाने घटत्वादौ प्रतियोगितावच्छेदकत्वावगाहनात्; अन्यथा घटत्वेनेत्याकारकतानुपपत्तेः, तथाच घटत्वेन पटो नास्तीत्यादावपि घटत्वादौ पटादिनिष्ठप्रतियोगितावच्छेदकत्वावगाहनं निराबाधमेवेति व्यधिकरणधर्मावच्छिन्नाभावसिद्धिर्निष्प्रत्यूहैव; नच तत्र व्यधिकरणधर्मस्यावच्छेदकत्वावगाहनसम्भवेपि अतिरिक्ताभावकल्पनागौरवभयेन तादृशप्रतीतेः पटाद्यधिकरणकघटत्वाद्यभावावगाहित्वमेव स्वीक्रियत इति वाच्यम्; असति बाधके तच्छब्दोल्लेखिप्रतीतेः तच्छब्दप्रतिपाद्यार्थविषयकत्वापरित्यागात् पटाद्यधिकरणकघटत्वाद्यभावस्य च घटत्वेन पटो नास्तीत्यादिशब्दात्कथमप्यप्रतीतेः प्रतीतिबलात्पदार्थान्तरसिद्धौ तत्पदार्थकल्पनागौरवस्य फलमुखत्वेनाबाधकत्वात्। नच प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानरूपकारणभेदेन तादृशप्रतीतेर्व्यधिकरणधर्मावच्छिन्नाभावावगाहित्वं न सम्भवतीति युक्तम्,

नचैवमपि प्रतियोग्यविषयकस्य अभावत्वप्रकारकप्रत्ययस्यापत्तिर्विना प्रतियोगिज्ञानहेतुता न शक्यते वारयितुमिति वाच्यम् प्रतियोगिज्ञानं विना प्रतियोग्यविषयकस्य इदन्त्वादिना ऽभावप्रत्यक्षस्य इदन्त्वादिरूपतादृशविशेषणज्ञानासत्त्वे च तादृशाभावनिर्विकल्पकस्येष्टत्वात् अभावनिर्विकल्पकानभ्युपगमे प्रतियोगिज्ञानहेतुतयापि तद्वारणासम्भवात् इदन्त्वादिना ऽभावप्रत्यक्षे व्यभिचारवारणायाऽभावत्वप्रकारकाभावप्रत्यक्षं प्रत्येव प्रतियोगिज्ञानस्य हेतुताया वाच्यत्वात् विशेषणानवच्छिन्नविषयतासम्बन्धेन प्रत्यक्षं प्रत्यभावभेदस्य हेतुतां स्वीकृत्य तद्वारणे च ममापि तस्य तथैव वारणीयत्वात् ।

वस्तुतस्तु — आपाद्याप्रसिद्ध्यैव तादृशापत्तेरनवकाशः, प्रतिज्ञाया घटो नास्तीत्यादिबुद्धेर्घटत्वादिविशिष्टवैशिष्ट्यावगाहितया तत्र प्रतियोगितावच्छेदकघटत्वादिप्रकारकज्ञानस्य विशेषणतावच्छेदकप्रकारकज्ञानविधया हेतुतायाः क्लृप्तत्वात् तादृशकारणविरहादेव न तच्छून्यकाले तदापत्तिः ।

यत्तु अनाहार्यप्रतियोगितावच्छेदकविशिष्टप्रकारकोपलम्भविरहो विशेष्यीभूतधर्मिप्रत्यासत्त्या ऽभावग्रहे हेतुः, तथाच यस्य पुंसः समवायित्वादिविशिष्टवाच्यत्वादिप्रकारकोऽनाहार्यभ्रमोऽप्रसिद्धः तदीयसमवायितया वाच्यत्वं नास्तीत्याकारकप्रत्ययो न व्यधिकरणधर्मावच्छिन्नाभावमवगाहितुमीष्टे, तदीयतादृशप्रतियोग्युपलम्भविरहरूपतदीयाभावप्रत्यक्षकारणस्याप्रसिद्धेरिति तत्पुरुषीयतादृशप्रत्ययस्य वाच्यत्वाद्यनुयोगिकसमवायित्वाद्यभावविषयकत्वावश्यकत्वे सर्वत्रैव तद्विषयकत्वमुचितम्, एकप्रकारप्रतीतेः पुरुषभेदेन विषयवैचित्र्यविरहादिति मिश्रोक्तो व्यधिकरणधर्मावच्छिन्नाभावनिराकरणस्य पन्थाः, सोपि न साधीयान्, अभावबुद्धौ स्वप्रतियोगितावच्छेदकविशिष्टस्य प्रतियोग्युपलम्भाभावत्वेन एक

[दी] यदि पुनरानुभाविको लोकानां स्वरसवाही घटत्वेन पटो नास्तीत्यादि प्रत्ययः तदा तादृशाभाववारणं गीर्वाणगुरूणामप्यशक्यमिति मन्तव्यम्॥

श्रीमद्रघुनाथभट्टाचार्यशिरोमणि विरचितायां तत्त्वचिन्तामणिव्याख्यायां
दीधित्यपराख्यायां व्यधिकरणधर्मावच्छिन्नाभावविचारस्समाप्तः ॥

---

कारणतायाः स्वत्वाननुगमेन दुर्वचतया विशिष्य कारणताकल्पनस्याव श्यकत्वे यत्र तादृशोपलम्भः प्रसिद्धः तत्रैव तादृशोपलम्भानन्तरमभाव प्रत्ययवारणाय तदभावहेतुत्वोपगमात् व्यधिकरणधर्मावच्छिन्नाभावबुद्धौ क्वचिदप्रसिद्ध्या तदभावहेतुत्वासम्भवेपि सन्निकर्षादिघटितसामग्रीत तदुत्पत्तौ बाधकाभाव इत्यत आह — **यदि पुनरिति ।** **स्वरसवाही**— विवादशून्यः । घटत्वेन घटो नास्ती ति पाठः, 'घटत्वेन पटो नास्ती' ति पाठो न साधु, तादृशप्रतीते पटाद्यनुयोगिकघटत्वाद्यभावा वगाहितायाः एव व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगन्तृभिरुपगमात् प्रति योगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकत्वं भासत इति नियमस्य तदाकारप्रतीतिबलेन अशक्यवारणत्वात् । **आनुभाविक** इत्यस्य व्यधि करणधर्मस्यावच्छेदकत्वावगाहितया अनुभवसिद्ध इत्यर्थकतया वा कथ चित्सङ्गमनीयः । **गीर्वाणगुरूणामपि न शक्य** मित्यनेन प्रतीतिकारण बाधेन तादृशाभावनिराकरणनिर्भरा मिश्रादय आक्षिप्ताः । **यदि** तदित्यनेन तादृशप्रतीतेरानुभाविकत्वे विवादं प्रदर्श्य तादृशाभावस्याऽपारमार्थिकत्वं सूचितम् ॥

इति महामहोपाध्याय गदाधरभट्टाचार्यचक्रवर्ति
विरचिते तत्त्वचिन्तामणि दीधितिव्याख्यायां
व्यधिकरणधर्मावच्छिन्नाभावखण्डनम् ।
॥ **चतुर्दशलक्षणी समाप्ता** ॥

[दी] यदि पुनरानुभाविको लोकानां स्वरसवाही घटत्वेन पटो नास्तीत्यादि प्रत्ययः तदा तादृशाभाववारणं गीर्वाणगुरूणामप्यशक्यमिति मन्तव्यम्॥

श्रीमद्रघुनाथभट्टाचार्यशिरोमणि विरचितायां तत्त्वचिन्तामणिव्याख्यायां दीधित्यपराख्यायां व्यधिकरणधर्मावच्छिन्नाभावविचारस्समाप्तः ॥

---

कारणतायाः स्वत्वाननुगमेन दुर्वचतया विशिष्य कारणताकल्पनस्याव- श्यकत्वे यत्र तादृशोपलम्भः प्रसिद्धः तत्रैव तादृशोपलम्भानन्तरमभाव प्रत्ययवारणाय तदभावहेतुत्वोपगमात् व्यधिकरणधर्मावच्छिन्नाभावबुद्धौ क्वचिदप्रसिद्ध्या तदभावहेतुत्वासम्भवेपि सन्निकर्षादिघटितसामग्रीत. तदुत्पत्तौ बाधकाभाव इत्यत आह — यदि पुन रिति । स्वरसवाही– विवादशून्य । "घटत्वेन घटो नास्ती" ति पाठः; "घटत्वेन पटो नास्ती" ति पाठो न साधुः; तादृशप्रतीते. पटाद्यनुयोगिकघटत्वाद्यभावा वगाहितायाः एव व्यधिकरणधर्मावच्छिन्नाभावानभ्युपगन्तृभिरुपगमात् प्रति योगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकत्वं भासत इति नियमस्य तदाकारप्रतीतिबलेन अशक्यवारणत्वात् । आनुभाविक इत्यस्य व्यधि करणधर्मस्यावच्छेदकत्वावगाहितया अनुभवसिद्ध इत्यर्थकतया वा कथं चिरसङ्गमनीय । गीर्वाणगुरूणामपि न शक्य मित्यनेन प्रतीतिकारण बाधेन तादृशाभावनिराकरणनिर्भरा मिश्रादय आक्षिप्ताः । यदि तदेत्यनेन तादृशप्रतीतेरानुभाविकत्वे विवादं प्रदर्श्य तादृशाभावस्याऽपारमार्थिकत्वं सूचितम् ॥

इति महामहोपाध्याय गदाधरभट्टाचार्यचक्रवर्ति विरचिते तत्त्वचिन्तामणि दीधितिव्याख्याने व्यधिकरणधर्मावच्छिन्नाभावखण्डनम् ।
॥ चतुर्दशग्रन्थसरणी समाप्ता ॥